* श्रीः *

# श्राद्धचिन्तामणिः ।

गौड़वंशावतंसेन पण्डितश्रीगजाननशर्मणा
निर्माय कर्णपुर-( कानपुर )-स्थमाडर्न-
मुद्रणयन्त्रालये पण्डितश्रीलालमणि-
शर्मद्वारा मुद्राप्य राजकीयनिय-
मानुसारेण सर्वाधिकारान्
संरक्ष्य प्राकाश्यं नीतः ।



प्रथमावृत्तौ
१०००

मार्गशीर्षकृष्णप्रदोषः
वि० सं० १९९८

श्रीः

# भूमिका ।

भो गीर्वाणवाणीनिर्वाणनिवारणव्रतनिर्वहणनिपुणाचरणा ! भारतविश्वम्भरागीर्वाणा ! वन्देलिमपादपाथोजै-र्व्यास-वसिष्ठ
--वसिष्ठ, बृहस्पति-योगियाज्ञवल्क्य-याज्ञवल्क्य--कात्यायन--हारीत--परा-
प्रभृतिभिर्मुनिकदम्बैर्निर्मितानां पुराण-धर्मशास्त्रादिग्रन्थगणानान्तद्विहित-
त्यनैमित्तिकशान्तिकपौष्टिकादिकर्मानुष्ठानानां परमकरालेऽस्मिन्कलि-
लकाले कीदृशी दुर्दशेति नैव केषाञ्चिदविदितचरम् । यथा प्राक्तना
त्यमुनिसन्तानजनाः "परीवादस्तथ्यो भवतु वितथो वाऽपि महतान्तथा-
पिधौम्नां हरति महिमानं जनरव" इत्युक्तरीत्या वेद-वेदाङ्ग-स्मृति-
राणेतिहास-वर्ज्जितकार्याणां कर्त्तृतायाः कैव कथा, "कथाऽपि खलु
पानामलमश्रेयसे यत" इति शिशुपालवधोक्तपद्यभागादेशं शिरसा
ीकृत्य तद्वार्त्तायामपि पापमनुसन्दधाना आसन्; तथैव हन्तेदानीन्तनास्त
व जनाः सर्वदा सर्वदं श्रेयःसरोरुहं समूलकाषं कषन्ति । जनतातापकरो
ग्रहवायुसखो विनैव जगत्प्राणान् जगत्प्राणभृतो भस्मसात्कर्त्तुं यतते ।
स्य प्रमाणं नैतत्समानं भिन्नं जानीमहे :--

यत् प्रवर्द्धमानवर्त्तमानमहासमरे कियन्तो भूवीरा नरकेसरिणः शत-
युद्गीर्णविषाक्तज्वलनज्वालाजालजर्जरा रणाजिरे शेरते । मनुसन्ततीनां
तीनां समासां प्राणाः सन्ततं धर्मे एव निर्भराः सन्तोऽयमयं समयं
निर्भयमयन्ते । धर्मशब्दार्थविवेचनेन शास्त्रविहितकर्मकरण-तद्वर्जितकर्मा-
करणरूपो धर्म इति पर्यवसीयते । एवमेवोपदिशति चाभियुक्तोक्तिः--
'प्रवृत्त्या च निवृत्त्या च सयत्नं धर्ममर्जयेदिति । तस्य चैतादृशचोदना-
लक्षणस्य धर्मकल्पद्रुमस्य गृहस्थाश्रम एव सर्वथोपयुक्तो विशाल आलवाल
इति न कस्य चित्सन्देहास्पदम् । शास्त्रचोदनया कर्त्तव्येषु धर्मप्रयोजककर्मसु
विवाहगर्भाधानादिश्राद्धान्तानामेव द्वितीयाश्रमेणाच्छेद्यसम्बन्धात् । तत्रापि
श्राद्धस्यातीवावश्यकत्वम्, तदकरणे पतनश्रवणात् । तदन्तः पातिमृतकश्राद्ध-
सांवत्सरिकैकोद्दिष्टश्राद्ध--पार्वणश्राद्ध--वृद्धिश्राद्ध-गजच्छायाश्राद्धान्वष्टका-
श्राद्धादिप्रापकैर्वचनैरितस्ततो विकीर्णैः परिपूर्णेषु तत्तन्महामुनिपूज्याचार्य-

करकमलाङ्कितेषु धर्मबोधकग्रन्थेषु विराजमानेषु सत्स्वपि नैकत्र प्रकरणोल्लेखनक्रमेण संगृहीतानि नयनपथपथिकायमानानि वचनानि, तैः सहिताः पद्धतयश्च समुल्लसन्ति। तज्जन्यक्लेशसमुदयसमुदयेन श्राद्धादिकार्यं कारयितॄणां कमलदलकोमलमतीनां दोदूयमानमानसानां मानसीं व्यथां दर्शं दर्शं दयाविष्टस्वान्ता मरुमहीमण्डलमण्डनायमाना गौड़द्विजन्मवंशे गृहीतजन्मानो निजनामधेयधन्या विद्वांसो गजाननाभिधाः सश्रमं तादृशं ग्रन्थरत्नं विलिख्य लोकौकसं क्लेशमपाचक्रुः। एतस्य च "श्राद्धचिन्तामणे" श्चिन्तामणेरिव चिन्ताचूर्णकस्याच्छिद्रस्य गुम्फने कियान् प्रयास इत्यनायासेनैव समेऽपि विद्वांसः समवेतुं शक्नुवन्ति। बह्वयो धर्मसंहिताः, प्रचुराणि पुराणानि प्रमाणानि प्रकरणे प्रकरणे दरीदृश्यन्ते। किमतिप्रशंसाशंसनेन, प्रायशः श्राद्ध-नारायणबलि-प्रोषितमृतदाहादिकर्ममर्मस्थले लिखितदुरूहधर्मपुराणादिग्रन्थगणोत्थितविधिबोधकवचनव्यूहैः सम्बद्धेनैतेन ग्रन्थेन केऽप्यन्ये ग्रन्था नो स्पर्धितुं पारयन्ति। "स्नात्वा तीर्थे महात्मानः पितॄणां पिण्डपातनम्। ये कुर्वन्ति पितॄन् सर्वान्निरयादुद्धरन्ति ते" इति ब्रह्मवैवर्तवचनात्प्राप्ततीर्थश्राद्धस्य पद्धतेः सत्रैव सम्मुद्रणादतिशयः स्वर्णसुगन्धिः। भोज्ये विहितब्राह्मणनिर्वचनाचमनोच्छिष्टोद्वासनादिविचारधारा चमत्कारातिशायिनी। अमुना "चिन्तामणिना" कर्मकाण्डसंसारे सरन्तः सरस्वतीसेवकाः सर्वथा समीचीनोपयोगेन लेखकानां महाभागानां परिश्रमं सोल्लासं यदि सफलयेरँस्तावतैव स्वस्वान्तं नितान्तं कृतकृत्यं मंस्यामहे।

"गच्छतस्स्खलनं क्वापी" तिन्यायेनैतदन्तर्गताऽशुद्धिविषये—

यावत्योऽशुद्धयः सन्ति नेत्रमुद्रणदोषतः।
अपसार्य समस्तास्ताः सुधियोऽधीयतां मुदा॥

इति दोषज्ञान्दोषज्ञानभ्यर्थ्य साम्प्रतमत्रैव विरामः साम्प्रतमिति शम्।

विदुषां विधेयो :—

**विद्यासिन्धुः श्रीवैद्यनाथमिश्रः।**

श्रीः ।

# ग्रन्थप्रणेतृपरिचयप्रतीकः ।

प्रादुरासीद्विक्रमीयवत्सरविंशतिशतकारम्भेऽधिमहेन्द्रगढनगरं गौड़-ब्राह्मणवंशे श्रौतस्मार्ततत्त्वविचारचतुरचक्रचूड़ामणिस्तद्विहितनित्यनैमित्तिकानुष्ठानचणो द्विजप्रियो गुरुपूजको वृद्धोपसेवी दयामेधाऽनभिमानादिगुणपरिपूर्णः पूर्णयशश्चन्द्रपयोनिधिः श्रीयमुनाशङ्करो नाम । स च श्रीभागीरथीमहिमश्रवणमनननिदिध्यासनजाततद्दर्शनसेवनोत्कण्ठापरवशस्तद्दक्षिणकूलस्थितं सर्ववर्णसमाकुलं सुखानुकूलं कर्णपुरमधिवसितुं निश्चिकायागत्याऽध्युवास च । तस्य चास्मिन्कलिकलामलीमसिताचारजालेऽपि काले सर्वथा तत्प्रभावाभावानाचारानाचरतस्तपश्चर्यामेव सर्वस्वीकुर्वतः श्रीगङ्गा-गङ्गाधराराधन एव समयं यापयतोऽस्मिन्धार्मिकजनरत्नसागरे नगरे प्रशस्या यशस्या वरिवस्या जाता । श्रीगङ्गा-गङ्गाधरानुकम्पया तस्य द्विजपुङ्गवस्याङ्गाग्न्यङ्काब्ज ( १६३६ ) प्रमिते विक्रमनिर्मितक्रमे सव्वँत्सरे प्रदीपात्प्रवर्त्तितः प्रदीप इव पुत्रः प्रादुरभूत् । तञ्च पञ्चमे वत्सरे पुत्रं प्राज्ञः पिता विद्यारम्भसंस्कारेण संस्कृत्य मधुरोपदेशकोमलतर्ज्जनादिना विनयन् स्वयमेवाध्यापनेन समबीभवत् । यदा तदा बाल्यसुलभातिसीमक्रीडनकूर्दनादिवर्ज्जनाय स्वानुपस्थितौ कस्य चिदन्तेवासिनोऽध्यापयतः पण्डितप्रवरस्य समीप उपवेशयति स्म । अत एवासौ सत्पुत्रप्रधानः सर्वान् पितृगुणाननायासमासादयामास । स च कर्णपुरनगरकर्णिकास्थानादतिगव्यूति पश्चिमोत्तरदिग्भागे भागीरथतटिनीतटे शङ्करवाटिकानामानमसमानमारामन्निर्माप्य तत्र कैलासशिखर इवात्युच्चस्थाने विकसिताष्टारवारिजानुकारि मनोहारि भक्तिप्रचारि हरविहारार्थं चन्द्रमौलिमन्दिरं विधाप्य तत्र सविधि स्वयमानीतं चन्द्ररेखाङ्कितं नार्मदं शिवलिङ्गं प्रतिष्ठाप्य तत्परिसर एव सुरतरङ्गिणीतीर आर्षं विद्यापीठन्नाम छात्रपाठमठं परीक्षानिरपेक्षं स्वनामधन्यान्नपूर्णारूपायाः सर्व-स्व-धर्ममर्मपालकसर्वार्हव्यापारव्यवहारचतुरतातिपतिविनतिरतिकमलापतिवनितायाः व्रतदानादिधर्मकार्यललितायाः साहाय्येन संस्थाप्य तदाराधनकार्यसाधनयोरेव वानप्रस्थप्रायं समयं समायते । स एव गजाननाभिधानः पण्डितप्रधानोऽस्यश्राद्धचिन्तामणिग्रन्थरत्नस्य प्रणेता । अस्य महानुभावस्यापि श्रीगङ्गा-गङ्गाधरानुकम्प्यतयैव चिरजीविपुत्ररत्नद्वयं सदनशोभां संवर्द्धयते । परिलक्ष्यते चानयोरपि श्रीगङ्गा-गङ्गाधरानुकम्पयैव कुलक्रमागतविद्याविनयादिगुणोपार्ज्जनार्हता ।



मान्यो विचारचतुरो द्विजदेवभक्तो
रक्तो गवां तनुभृतामवने च सक्तः ।
व्यापारपारगतकर्णपुरेऽपरेऽस्मिन्
पुण्यप्रियः स कमलापतिगुप्त आसीत् ॥

## समर्पणम्



पुत्रः श्रीकमलापतेर्दशरथस्येवैष रामोऽधुना
श्रीमान् पद्मपतिः पयोजनिजनेस्तुल्यः स्वकार्यक्रमे ।
दक्षो धीर उदारधीरिति मयैतस्याब्जहस्तेऽर्प्यते
ग्रन्थो गौड़गजाननेन कृतिनाऽयं "श्राद्धचिन्तामणिः" ॥

॥ श्रीः ॥

# अथ श्राद्धचिन्तामणिग्रन्थविषयानुक्रमणिका

पृष्ठाङ्काः

पृष्ठाङ्काः

पृष्ठाङ्काः

पृष्ठाङ्काः







॥ श्रीगणेशाय नमः ॥

# अथ श्राद्धचिन्तामणिः



सिन्दूरारुण रञ्जित भालम्,
कर्णाताडित षट्पद जालम्।
विद्या बुद्धि वरं भय कालम्,
शुण्डिन्नौमि गजानन पालम्।
पुस्तक वीणा वादन शीले,
वाहित हंसे ज्ञान वरिष्ठे।
आशुकवित्वं चारु सुशीले,
त्वत्पदलग्ना वाणि लभन्ते।



## अथ श्राद्धचिन्तामणौ प्रथमं वृद्धिश्राद्धम्।

अथेदानीं ब्राह्मणादि रूपाधिष्ठाने वसु रुद्रादित्य पितृ मत्सोमाङ्गिरस कव्यवाहनाग्नि सोमपाज्यपाग्निष्वात्तादीनां महामहिम्नां पितृ रूपाणां देवता नामाराधन मुच्यते। आराधनञ्च मनसः प्रीणनं तस्य चोपायः श्राद्ध लक्षणं कर्म। अतस्तदुच्यते तत्र तावद्विधिः स्वविधेयेर्थे पुरुषं प्रवर्त्तयन् स्वसाध्य पुरुष प्रवृत्यतिशय कारिणीं विधेय प्ररोचनाम पेक्षमाणो विधेय रुच्युत्पादकानि प्रशंसा वचनान्य पेक्षते फल वचनानि

च। यथैवेते पुरुषा विधेयेर्थे प्रवर्त्तन्ते तथैव तद्विषये ग्रन्थे श्रोतारः। अतस्तेषामपि तत्र विधि प्रशंसा वाक्यानि प्रवर्त्तकानीति श्राद्ध विषयाणि। तान्येव प्रथमभि लिख्यन्ते। तानि च परस्परान्वयादेक वाक्यतां गतानीत्येकमेवेदं प्रकरणम्। तत्र तावदनेक रूपाणां श्राद्धानां मध्ये मांगलिकत्वेनाभ्यर्हितत्वात् वृद्धिश्राद्धा देवारम्भः क्रियते।

तत्र तावदे तच्छ्राद्धं मण्डपदेवता, कुलदेवता स्थापन पूर्वकं मातृका पूजां विधाय वसोर्धारां च कृत्वा कार्य्यम्।

तथाह वृद्धवसिष्ठः—

पुत्रजन्म विवाहादौ वृद्धिश्राद्ध मुदाहृतम्।

जावालिः—

यज्ञोद्वाह प्रतिष्ठा सुमेखलावन्ध मोक्षयोः।
पुत्रजन्म वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्॥

कात्यायनः—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कार कर्म्म सु।
पिण्डानुद्वहनात्तेषां तस्याभावेतु तत्क्रमात्॥

विष्णुपुराणे—

कन्या पुत्र विवाहे च प्रवेशे नववेश्मनः।
नाम कर्म्मणि वालानां चूड़ाकर्म्मादिके तथा॥
सीमन्तोन्नयने चैव पुत्रादि मुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही॥

ब्रह्मपुराणे—

कर्म्मण्यथाभ्युदयिके विवाहे पुत्रकस्य च।
पितृन्नान्दीमुखान्नाम तर्पयेत् विधि पूर्वकम्॥

आदित्यपुराणे—

देवाश्च पितरश्चैव पुत्रेजाते द्विजन्मनाम्।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥
तत्र दद्यात्सुवर्णं तु भूमिं गां तुरगं रथम्।
छत्रं वस्त्रं च माल्यं च शयनं चासनं गृहम्॥

मनुः—

प्राङ्नाभि वर्द्धनात् पुंसो जातकर्म्म विधीयते ।

विष्णु धर्म्मोत्तरे । आह मार्कण्डेयः—

आछिन्ननाभ्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि ।
अशौचो परमे कार्य्य मथवा नियतात्मभिः ॥

हेमाद्रिः—

पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चामेन कल्याणान्यभि कामयन् ॥

नान्दीमुखावधिश्च स्मृत्यन्तरे—

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते ॥

गार्ग्यः—

नान्दी श्राद्धे कृते पश्चाद्यावन्मातृ विसर्जनम् ।
दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥
अपसव्यं स्वधाकारं नित्य श्राद्धं तथैव च ।
ब्रह्मयज्ञं चाध्ययनं नदी सीमाति लङ्घनम् ॥
उपवासं व्रतं चैव श्राद्ध भोजन मेव च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि ॥
आभ्युदयिके सम्प्राप्ते देवता स्थापनं स्मृतम् ।
जाति धर्म्म कुलाम्नातं लोकानां वृद्धिकारकम् ॥

आभ्युदयिक श्राद्धे कर्त्तव्यतया प्रस्तुते सति ब्राह्मणादि जाति विभागेन श्रुत्यादिषु समाम्नातं कुल वृद्धैश्चोपदिश्यमानं देवतानां प्रतिष्ठापनं कर्त्तव्यतया स्मृतं तद्धि लोकानां वृद्धेर्मङ्गल परम्परायाः कारणम् । अस्यानन्तरं मातृपूजनं कर्त्तव्यम् ।

तथाच कूर्मपुराणे—

पूर्वं तु मातरः पूज्या भक्त्या वै सगणेश्वराः ।

एतच्चमातृणां पूजनं नामानि चोक्तानि चतुर्विंशति मते—

तिस्रः पूज्याः पितुः पक्षे तिस्रः पूज्यास्तु मातृके ।
इत्येता मातरः प्रोक्ताः पितृ मातृ स्वसाष्टमी ॥
ब्रह्माण्याद्याः स्मृताः सप्त दुर्गा क्षेत्र गणाधिपाः ।
आदौ वृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान्पितॄन् ॥
गौरी पद्मा शची दक्षा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोक मातरः ॥
एतास्त्वभ्युदये पूज्या आत्मदेवतया सह ॥

पितुः पक्षे तिस्रः मातृ पितामही प्रपितामह्यः मातृके मातामह पक्षे तिस्रः मातामही मातुः पितामही मातुः प्रपितामह्यः पूज्याः । पितृ स्वसा सप्तमी मातृ स्वसाष्टमी च पूज्या । इत्यष्टौ मनुष्य मातरः प्रोक्ताः एताश्च प्रत्यक्षाः प्रत्यक्षमेव कुङ्कुम कुसमं वस्त्राभरण भोजनैः पूजनीयाः। परोक्षास्तु वक्ष्यमाण देवमातृवत् अक्षतादि* पुञ्जे स्वावाह्य पूजनीयाः ब्रह्माण्याद्याः स्मृताः सप्त। ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी चामुण्डा इत्येताः सप्त देवमातृः तथा दुर्गां क्षेत्राधिपं गणाधिपञ्च वृद्ध्यादौ वृद्धि श्राद्धात्प्राक् षोडश भिरुपचारैः पूजयित्वा पश्चान्नान्दीमुखान् पितॄन् श्राद्धेन पूजयेत्। आत्मदेवता स्वकीय कुलदेवता तया सहैताः पूज्याः ।

आह शातातपः—

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टि रात्म देवतया सह ।
आभ्योऽर्घं गन्ध पुष्पञ्च धूपन्दीपं निवेदयेत् ॥

एतच्च मातृपूजनं कर्माङ्ग श्राद्धेपि कार्यमिति षट्त्रिंशन्मते—

कर्मादिषु च सर्वेषु मातरः स गणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्तिताः ॥

---

* केषाञ्चिन्मते अक्षत पुञ्जाय व मुष्टयः ।

आसांच पूजाधिष्ठानं वसोर्धारा निर्माणादि च तत्रैवोक्तम्—

प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु ।
अपिवाक्षत पुंजेषु नैवेद्यैश्च यथा विधैः ॥
कुड्य लग्नावसोर्धारा पञ्चधारा घृतेन तु ।
कारयेत्सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥
आयुष्याणि च शान्त्यर्थं जपेत्तत्र समाहितः ॥

आयुष्याणि—आनोभद्रीयादीत्याशीः प्रधानानि सूक्तानि तथा तथा विधमंत्रा धाराणि सामानि च एतन्मातृपूजनस्याकरणे दोषोदर्शितः भविष्यत्पुराणे—

अकृत्वा मातृ यज्ञन्तु यः श्राद्धम्परिवेषयेत् ।
तास्तस्य क्रोध सम्पन्ना हिंसां कुर्वन्ति दारुणाम् ॥

मातृणां प्रतिमा स्वरूपं मार्कण्डेय पुराणे—

हंस युक्त विमानस्था साक्षसूत्र कमण्डलुः ।
आयाता ब्रह्मणः शक्तिः ब्रह्माणी साभिधीयते ॥
माहेश्वरी वृषारूढा त्रिशूल वरधारिणी ।
महाहि वलया प्राप्ता चन्द्ररेखा विभूषणा ॥
कौमारी शक्ति हस्ता च मयूर वरवाहना ।
योद्धुमभ्या ययौ दैत्यानम्बिका गुहरूपिणी ॥
तथैव वैष्णवी शक्तिर्गरुडो परिसंस्थिता ।
शङ्ख चक्र गदा शार्ङ्ग खड्गहस्ताभ्युपाययौ ॥
यज्ञ वाराहमतुलं रूपं या विभ्रतो हरेः ।
शक्तिः साप्या ययौ तत्र वाराहीं विभ्रती तनुम् ॥
वज्रहस्ता तथैवैन्द्री गजराजो परिस्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥

सिद्धार्थ पृच्छायाम्—

योगमुद्रां च चापं च क्रमेणैवार्द्ध भाजनम् ।
कृपाणीं चैव या धत्ते सा चामुण्डा प्रकीर्तिता ॥

आद्ये ब्रह्मपुराणे—

महालक्ष्मीश्च कर्त्तव्या नृत्यमाना कपालिनी ।
कार्त्तिकी तुङ्ग खट्वाङ्ग त्रिमालाम्बुज धारिणी ।।
कूष्माण्डया तु प्रेतस्था दन्तुरा वर्वरं शिरः ।।

सिद्धार्थ पृच्छायाम् ।

गौरी —

कार्मुकं चार्घपात्रं च योगमुद्रां कृपाणिकाम् ।
पाणिभिर्या क्रमाद् धत्ते सा गौरी परिगीयते ।।

पद्मा—

चंद्रार्द्ध नव चक्षुर्भ्याम्भास्करेण क्रमेण च ।
विद्योतन्ते करा यस्याः पद्मा सा च प्रकीर्त्तिता ।।

शची—

कीरक व्यजनी चैव व्यजनं समिधं तथा ।
या विभर्त्ति कराग्रैः सा शची नाम्ना प्रकीर्त्तिता ।।

मेधा—

धत्ते या समिधं हस्तैः रजनी कीरका वपि ।
क्रमतस्ताल वृन्तश्च सा च मेधाभिधीयते ।।

सावित्री—

अक्ष सूत्रं स्रुवं चैव शक्तिकां च कमण्डलुम् ।
कलयन्ति करायस्याः सावित्री सा प्रकीर्त्तिता ।।

विजया—

या कपालं च कोशं च पीयूषं पाश मेव च ।
या विभर्त्ति कराम्भोजै र्विजया सा प्रकीर्त्तिता ।।

जया—

क्रमात् कोश कपाले च पीयूषं च स पाशकम् ।
आश्रित्य यत् कराग्राणि विजयन्ते जया च सा ।।

देवसेना—

एह्येहि चापासि धरे कुमारि मयूरवाहि कमलाय ताक्षि ।
इन्द्रादि देवै रपि स्तूय माने प्रयच्छातित्वं मम देवसेने ॥

स्वधा—

एह्येहि वैश्वानर वल्लभे त्वं कव्यं पितृभ्यः सततं वहन्ति ।
स्वर्गाधिवासे शुभ शक्तिहस्ते स्वधेतु नः पाहि मखन्नमस्ते ॥

स्वाहा—

एह्येहि वैश्वानर तुल्य देहे तडित्प्रभे शक्तिधरे कुमारि ।
हविर्गृहीत्वा सुर तृप्ति हेतो स्वाहे च शीघ्रं मख मस्मदीयम् ॥

मातरः—

भूतग्राम मिदं कृत्स्नं या भिरुत्पादितम्पुरा ।
त्रैलोक्ये पूजिता देवि मातृरा वहयाम्यहम् ॥

लोकमातरः—

आवाहये ल्लोक मातृर्जगत्पालन संस्थिता ।
शक्राद्यैरर्चिता वन्द्याः स्तोस्त्रैरा राधयेत्सदा ॥

धृतिः—

एह्येहि भक्ता भयदेकुमारि समस्तलोकप्रिय हेतु मूर्त्ते ।
प्रोत्फुल्लपङ्केरुहलोलनेत्रे धृते मखं पाहि शिवस्वरूपे ॥

पुष्टिः सागर संहितायाम्—

दर्पणं पङ्कजं पद्मं पुष्टिकां दधतीं स्मरेत् ।
पुष्टिं लक्ष्मीं सितां सौम्यां पङ्कजासन संस्थिताम् ॥

तुष्टिः—

वज्रं पद्मं तथा दर्शं पीयूषं दधतीं स्मरेत् ।
यावै तुष्टि महालक्ष्मीः स्थिता वीरासनो परि ॥

आत्मकुलदेवता—

एह्येहि दुर्गे दुरितौघनाशिनि प्रचण्ड दैत्यौघविनाशकारिणि ।
शिवे महेशार्द्धशरीरधारिणि स्थिराभवत्वं मम यज्ञकर्मणि ॥

विनायक प्रतिमास्वरूपं मत्स्यपुराणे—

स्वदन्तं दक्षिण करे उत्पलं च तथा परे ।
लड्डुकं परशुं चैव वामतः संप्रकल्पयेत् ॥
संयुक्तं बुद्धि ऋद्धिभ्यामधस्तान्मूषिकान्वितम् ।
तदेवमिदं देवता प्रतिष्ठापनात् प्रभृति वसोर्धरा—
पर्य्यन्तं पूजनं कृत्वा नान्दी श्राद्धमारभेत ।

---

# अथ वृद्धिश्राद्ध मीमांसा

चतुर्विंशतिमते—

षड्भ्यः पितृभ्यस्तदनु श्राद्ध दान मुपक्रमेत् ।
वसिष्ठोक्तोविधिः कृत्स्नो द्रष्टव्योत्र निरामिषः ॥

तदनु-मातृपूजानुत्तर कालम्—

भविष्यपुराणे—

पिण्डनिर्वपणं कुर्य्यान्नैव कुर्य्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो कुलधर्म मवेक्ष्यवै ॥

छान्दोग्य ग्रन्थे अर्घ्यपात्र संख्योक्ता ।

चत्वार्य्यर्घ्यपात्राण्याभ्युदयिक इति ।

एतानि मात्रादि श्राद्धत्रये त्रीणि वैश्वदेविके चैक मित्येवं विभजनीयानि ।

अतएवाह कात्यायनः—

कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्य प्रदीयते ।

मार्कण्डेयपुराणे—

उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ।
वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचन ॥

आह प्रचेताः—

प्राङ्मुखो देव तीर्थेन वृद्धौ परिचरेत्पितॄन् ।

ईश्वरः—

अपसव्यं पित्र्यसंज्ञाः वासजानु निपातनम् ।
न्युब्जपात्रं न कुर्वीत वृद्धिश्राद्धेषु सर्वदा ॥
कुर्यात्स्वाहा स्वधा स्थाने वाचने प्रीयतामिति ।
वृद्धिश्राद्धेषु सर्वत्र नमो मे वृद्धिरिष्यते ॥
तथा क्षय्योदकस्थाने दद्यात् क्षीरयवोदकम् ॥

उदीरतामवर इत्यारभ्य त्रयोदश मंत्राणां पित्र्यमंत्र संज्ञाते वर्ज्याः ।
नत्वा यन्तुन इत्ययं न निषिध्यते ।

जातूकर्ण्यः—

पितृलिङ्गेन मंत्रेण यत् कर्म्म मुनिभिः स्मृतम् ।
तेनैवतद्विधातव्यममंत्रमकृतं यतः ॥

अत्र यवोसीत्यूहः कार्य्यो मुख्य द्रव्याभिधायकत्वात् ।

आद्ये ब्रह्मपुराणे—

पठेत्तु शक्र सूक्तं तु स्वस्तियुक्तं शुभं तथा ।
युक्तामश्रु मुखानांतु न पठेसितृ संहिताम् ॥

पुराण समुच्चये—

न स्वधा शर्म वर्मेति पितृ नाम नचोच्चरेत् ।
न कर्म्म पितृ तीर्थेन न कुशा द्विगुणी कृताः ॥
न तिलैर्नापसव्येन पित्र्य मंत्र विवर्जितम् ।
अस्मच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित् ॥

प्रचेताः—

न जपेत्पैतृकं मंत्रं न मांसं तत्र दापयेत् ।
रक्तपुष्पं तिलांश्चैव अपसव्यं च वर्जयेत् ।।

कूर्मपुराणे—

दैववत्सर्व मेवस्यान्नवैकार्य्यास्तिलैः क्रिया ।
दर्भाश्च ऋजवः कार्य्या युग्मान्वै भोजयेत् द्विजान् ।।
निपातो नहि सव्यस्य जानुनो विद्यते क्वचित् ।
न चापसव्यकरणं न पित्र्यं तीर्थं मिष्यते ।।

शातातपः—

मातृश्राद्धन्तु पूर्वं स्यात् पितॄणान्तदनन्तरम् ।
ततो मातामहानां च वृद्धौश्राद्धं त्रयं स्मृतम् ।।

मत्स्यपुराणे—

मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।
ततो मातामहाः पूज्याः विश्वेदेवास्तथैव च ।।

भविष्यत्पुराणे—

भोजयेच्च द्विजानष्टौ मातृश्राद्धे खगेश्वर ।
नवमं सर्व दैवत्यं भोजयेत् द्विजमागतम् ।।

वसिष्ठः—

मातृभ्यः कल्पयेत् पूर्वं पितृभ्यस्तदनन्तरम् ।
ततो मातामहानां च कुर्य्याच्छ्राद्धं क्रमेण वै ।।
यथा मनुष्यास्तुष्यन्ति दृष्ट्वा पत्नीः सुपूजिताः ।
पूजितास्विह पत्नीषु तुष्यन्ति पितरस्तथा ।।
मातृ श्राद्धे तु विप्राणामलाभे पूजयेदपि ।
पति पुत्रान्विता भव्या योषितोष्टौ मुदान्विता ।।

ब्रह्मपुराणे—

युग्मांस्तु भोजयेद्वृद्धौ ब्राह्मणान्नियतः शुचिः ।

वृद्धशातातपः । तथैव छागलेयः—

एकैकस्य च वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत् ।
वैश्वदेवे तथा द्वौच न प्रसज्येत विस्तरे ॥

आग्ने वह्निपुराणे—

शक्राग्नि यम भान्वम्भोऽनिलचन्द्रशिवां शकान् ।
दद्याद्भासनं देवान् पितृनुद्दिश्य तेषु च ॥

शातातपः—

कर्त्तव्यं चाभ्युदयिकं श्राद्धमभ्युदयार्थिना ।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥
पितृणां रूपमास्थाय देवा अन्नं समश्नुते ।
तस्मात् सव्येन दातव्यं वृद्धिश्राद्धेतु नित्यशः ॥

पद्मपुराणे । ब्रह्माण्डपुराणे । विष्णु धर्मोत्तरे—

तिलार्थस्तुयवैः कार्यः सव्येनैवानु पूर्वशः ।
स्वाहाशब्दं प्रयुञ्जीत स्वधास्थाने च बुद्धिमान् ।
कुशस्थाने च दूर्वास्यु मंगलस्याभि वृद्धये ॥

कूर्म्मपुराणे—

मधुमध्वितियस्तत्र त्रिर्जपः श्रेय इच्छता ।
गायत्र्यनन्तरं सोत्र मधुमंत्र विसर्जितः ॥
रक्तपुष्पं तिलांश्चैव अपसव्यं च वर्जयेत् ॥

ब्रह्मपुराणे । विष्णु धर्म्मोत्तरे—

शाल्यन्नं दधिमध्वक्तं वदराणि यवां स्तथा ।
मिश्रीकृत्यतु चत्वारि पिण्डान् श्रीफलसन्निभान् ।
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधि पूर्वकम् ॥

मार्कण्डेयः—

पिण्डांश्च दधिसंमिश्रान् दद्यात् यव सुमिश्रितान् ।

बृद्ध वसिष्ठः—

दधिकर्कन्धु संमिश्राः पिंडा कार्या यथाक्रमम् ।

चतुर्विंशति मते—

द्वौ द्वौ चाभ्युदये पिण्डा वेकै कस्मै विनिक्षिपेत् ।
एकं नाम्ना परं तूर्ष्णीं दद्यात् पिण्डान्पृथक् पृथक् ।।

अत्र पिंडदानं चाधिकृत्योक्त माद्ये ब्रह्मपुराणे—

कात्यायनः—

सर्वस्माद्न्नमुत्सृज्य व्यंजनैरुपसिच्य च ।
संयोज्य यव कर्कन्धुः दधिभिः प्राङ् मुखस्थितः ।।
अर्घ्यं पुष्पं च धूपं च प्रशस्त मनु लेपनम् ।
वासः साध्वहतं शुद्धं देयं च सदृशं समम् ।।
द्राक्षामलक मूलानि यवांश्चाथ निवेदयेत् ।
तान्येव दक्षिणार्थं तु दद्यात् विप्रेषु सर्वदा ।।
अथाक्षय्योदकस्थाने दत्वा क्षीर यवादिकम् ।
नान्दीमुखेभ्यश्चाक्षय्य मिदमस्त्विवति संजपेत् ।।

आद्ये ब्रह्मपुराणे—

प्राङ्मुखांस्त्वथदर्भास्तु दद्यात् क्षीरावनेजनम् ।
नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदक क्रियाम् ।
प्राजापत्येन तीर्थेन यच्च किंचित् प्रजायते ।।

आह कात्यायनः—

प्रागग्रेषु च दर्भेषु आद्यमा मंत्र्य पूर्ववत् ।
अपः क्षिपेन्मूल देशेऽवनेनिक्ष्वेति निस्तिलः ।
द्वितीयं च तृतीयं च मध्य देशाग्र देशयोः ।
'आमंत्र्य' गोत्र-सम्बन्ध-नामभिः सम्बोध्य ।
मातामह प्रभृतींस्तु एतेषामेव वाग्यतः ।
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ।।

संयोज्य यवकर्कन्धु दधिभिः प्राङ्मुखस्ततः ।
अवनेजनवत् पिण्डान् दद्याद्बिल्व प्रमाणकान् ।।
तत्पात्र क्षालनेनाथ पुनरप्य वनेजयेत् ।
उत्तरोत्तर दानेन पिण्डानामुत्तरोत्तरः ।।
तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत् स्वितरेषु च ।
मूलमध्याग्र देशेषु ईषत्सक्तांश्च निर्वपेत् ।।
श्राद्धे सदैव वामाङ्गे पत्नीनामुदकं हरेत् ।
वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्गे सदा भवेत् ।।

उदकं अवनेजनमतः पिण्डमपि तत्रैवेति ।

अग्नौकरणमर्घ्यं च आह्वनं च वने जनम् ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्त्तते ।।
पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते ।
स्वधा वाचन लोपोस्ति विकिरस्तु न लुप्यते ।।
अक्षयं दक्षिणा स्वस्ति सौमनस्यं यथास्थितम् ।
अक्षय्योदक दानं च अर्घ्यदान वदिष्यते ।।
षष्ठयैव नित्यं तत् कुर्य्यान्न चतुर्थ्या कदाचन ।।

शातातपः—

नान्दीमुखास्तु पितरस्तृप्यन्तामिति वाचयेत् ।
विश्वेदेवाश्च प्रीयन्ता मिति दाता ब्रवीदिमान् ।।

ब्रह्म पुराणे—

नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत् ।

चतुर्विंशतिमते—

प्रीयन्तामिति च ब्रूयात् पिण्डान् स्वाहेति निक्षिपेत् ।

आश्वलायन गृह्य परिशिष्टे—

नान्दीमुखाः पितरः प्रीयन्तामिति विसृजेदिति ।

आद्ये ब्रह्मपुराणे—

चमूषुवाजिन मिति पठं तांश्च विसर्जयेत् ।
अथनान्दीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तमम् ॥
अनेन विधिना कार्य्यं सीमन्तोन्नयनादिषु ।

आह कात्यायनः—

शिवा आपः सन्त्विवति च युग्मान्यवोदकेन च ।
सौमनस्य मस्त्विवति च पुष्पदान मतः परम् ॥
अक्षतं चारिष्टं चास्त्विवत्यक्षतान् प्रतिपादयेत् ।
अक्षय्यं च ततः कुर्य्याद्दैव पूर्वं विधानतः ॥

अथाशीः प्रार्थनायाम् अत्र दातार इत्यादि प्रार्थनाश्लोकान्पूर्वं प्रयोज्य श्लोकान्तरं पठेत् ।

भविष्यत्पुराणे—

माता पितामही चैव तथैव प्रपितामही ।
एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥

चतुर्विंशतिमते—

शेषमन्नमनुज्ञाप्य वैश्वदेव क्रियां ततः ।
श्राद्धान्हि श्राद्ध शेषेण वैश्वदेवं समाचरेत् ॥

परिवेषणीयमन्नमुक्तं भविष्यपुराणे—

पृषदाज्येन संयुक्तं दद्यादोदनमादितः ।
पायसं च तथा भव्यं मोदकादिरसोत्तमम् ॥
मधुरं भोजनं दद्यान्न चाम्लं परिवेषयेत् ।

ब्रह्माण्ड पुराणे—

मङ्गल्यं भक्ष्यभोज्यं च दद्यादन्नं पृथग्विधम् ।
गुडामिश्रं खगश्रेष्ठ साज्यं चैवोदनं परम् ॥
रसालान् मोदकांश्चैव न चाम्ल कटुकादिकम् ।

आदि शब्देनात्रोद्वेजक तिक्तादि रस संग्रहः क्रियते अत्र कट्वम्लादि प्रत्यक्षं निषिध्यते न तु शाकादिषु संस्कार वशान्निषिध्यते ।

इति वृद्धिश्राद्ध मीमांसा

# अथ वृद्धिश्राद्धस्य कात्यायनोक्ता प्रयोग पद्धतिः ।

आभ्युदयिके प्रदक्षिणमुपचार-पित्र्यमंत्रवर्ज्यं जपः-ऋजवो दर्भाः-यवैस्तिलार्थो-सम्पन्नमिति तृप्ति प्रश्नः-सुसम्पन्नमितीतरे ब्रूयुः-दधिवद राक्षतमिश्राः पिण्डाः-नान्दीमुखान्पितृन् वाचयिष्य इति पृच्छति-नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत--युग्मा नाशयेदिति। अस्यार्थः। आभ्युदयिके-पुत्रजन्म विवाहादि रूपाभ्युदय निमित्तके श्राद्धे। प्रदक्षिण ग्रहणेन यज्ञोपवीतत्व-प्रागुदङ् मुखत्वप्रागुदक्संस्थत्वं चोपलक्षितम्। उपचारः-अनुष्ठानं। पित्र्य मंत्र वर्जं जपः। स चावसरस्तु पित्र्य मंत्र जपः प्रतिपिध्यते-आयन्तु न इत्यादि पितृ शब्दवन्मंत्र वर्जं। ऋजवोदर्भाः न तु द्विगुण भुग्नाः। तिलार्थः—तिलकार्यं यवैरेव कर्त्तव्यम्। अत्र तिलोसीत्यादिमंत्रो यवोसीत्येवं प्रयोज्य इति कर्कः।

तृप्ताः स्थेत्यस्य स्थाने सम्पन्न मिति प्रश्नः कार्य्यः। ब्राह्मणैश्च सुसम्पन्न मित्युत्तरं प्रदेयं। पितृना वाहयिष्य इत्यस्य स्थाने नान्दीमुखान् पितृनावाहयिष्य इति प्रयोगः।

एवं यत्र यत्र पितृ पद प्रयोगः तत्र तत्र नान्दीमुख पदं पूर्वम्प्रयोज्य मिति ज्ञेयम् स्वधा वाचन स्थाने नान्दीमुखान् पितृन् स्वाहां वाचयिष्य इति पृच्छति। वाच्यतामिति ब्राह्मणैरनुज्ञातो नान्दीमुखेभ्यः स्वाहोच्यतामिति प्रेष्यति अस्तु स्वाहेति ब्राह्मणैरनुज्ञातः। ऊर्जमित्यादि मंत्रे स्वाहास्थे त्यूहं विधाय भूमा वास्तृत दूर्वासु जलं निषिञ्चेत्। अत्र युग्मान् ब्राह्मणान् भोजयेदिति।



# श्राद्धमवश्यमेव कार्यम्

## अथामावस्यादि श्राद्धमधिकृत्य लिख्यते

प्रदत्त पिण्डान् स्वपुरः सपिण्डैः
　　प्रभूत पापान्नरकौक सोपि ।
समुद्धरन्तं कृपयादि देवं
　　गदाधरं नौमि गया शिरस्थम् ॥

---

आह सुमन्तुः—

श्राद्धात् परतरं नान्यच्छ्रेयस्कर मुदाहृतम् ।
तस्मात् सर्व प्रयत्नेन श्राद्धं कुर्य्यात् विचक्षणः ।

ब्रह्मपुराणे—

तस्माच्छ्राद्धं नरोभक्त्या शाकैरपि यथाविधि ।
कुर्वीत श्रद्धया तस्य कुले कश्चिन्नसीदति ॥

ब्रह्मवैवर्त्त-वायुपुराणयोः—

देवकार्य्यादपि सदा पितृ कार्य्यं विशिष्यते ।
देवताभ्यः पितृणां हि पूर्वमाप्यायनं शुभम् ॥

सर्वेषु दैवेषु कर्म्मषु कर्म्माङ्ग श्राद्धस्य पूर्वं मनुष्ठानात् देवेभ्यः पूर्वं पितृणा माप्यायनमिति ।

नागरखण्डे—

श्राद्धेतु क्रियमाणे वै न किंचित् व्यर्थतां व्रजेत् ।
उच्छिष्टमपि राजेन्द्र तस्माच्छ्राद्धं समाचरेत् ॥
विप्र पादोदकं यच्च भूमौ पतति पार्थिव ।
तेनये गोत्रजाः केचिद् पुत्राभरणं गताः ॥
तावत्पुष्कर पात्रैस्तु पिवन्ति पितरो जलम् ।
श्राद्धे अक्रियमाणे तु यत् किंचित्पतति क्षितौ ।
पुष्पगन्धादि कंचान्न मपि तोयं नरेश्वर ।
तेन तृप्तिं परां यान्ति ये कृमित्व मुपागताः ॥
कीटत्वं वापि तिर्यक्त्वं व्यालत्वं वानराधिप ।
यदुच्छिष्टं क्षितौ याति पात्रप्रक्षालनोद्भवम् ॥
तेन तृप्तिं परां यान्ति ये प्रेतत्व मुपागताः ।
ये चाप मृत्युना केचिन्मृत्युं प्राप्ताः स्ववंशजाः ॥
विकिरेण प्रदत्तेन ते तृप्तिं यान्ति चाखिलाः ॥

तदेवं श्राद्धावयवैः केषामपि वंश्यानां तृप्ति रुक्ता ब्राह्मण भोजनादिना प्रधान कर्म्मणा तु मुख्यानामुद्दिश्यमानानां पितृ पितामहादीनां तृप्तिर्भवतीत्युक्तम् ।

स्कान्दे—

पितॄनुद्दिश्य यत् कव्यं ब्राह्मणेभ्यश्च दीयते ।
सम्यक् श्रद्धा परैर्मर्त्यैस्तद् भवे तृप्तिदं महत् ॥
पितॄणां सर्व देवेश इत्येषा वैदिकी श्रुतिः ।
पितुः पितामहस्यापि तत्पितुश्च ततः परम् ॥
समुद्देशेन दत्तेन ब्राह्मणेभ्यः प्रभक्तितः ।
सर्वेषां स्यात्परा तृप्तिर्यावदा भूत संप्लवम् ॥

पाद्म मात्स्ययोः—

यदिमर्त्यैर्द्विजैर्भुक्तं हूयते यदि वाऽनले ।
शुभाशुभात्मकैः प्रेतैस्तद्दत्तं भुञ्जते कथम् ॥

अस्योत्तरमाह देवलः—

यदि देवः पिताजातः शुभकर्मानुयोगतः ।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनु गच्छति ॥
गान्धर्वे भोग्य रूपेण पशुत्वे च तृणं भवेत् ।
श्राद्धान्नं वायु रूपेण नागत्वेऽप्यनु गच्छति ॥
पानं भवति यक्षत्वे राक्षसत्वे तथामिषम् ।
दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ॥
मनुष्यत्वेन्नपानादि नाना भोग रसो भवेत् ॥
कथं कव्यानि दत्तानि हव्यानि च जनैरिह ।
गच्छन्ति पितृलोकं वा प्रापकः कोत्र गद्यते ॥

अस्योत्तरं वायुपुराणे—

कालेन्यायागतं पात्रे विधिना प्रतिपादितम् ।
अन्नं न यन्ति तत्रेते जन्तुर्यत्रावतिष्ठते ॥
नाम गोत्रं च मंत्रश्च दत्तमन्नं नयन्तिते ।
अपि योनिशतं प्राप्तान् तृप्तांस्तानुपतिष्ठति ॥

याज्ञवल्क्य स्मृतौ—

वसु रुद्रादिति सुताः पितरः श्राद्ध देवताः ।
प्रीणयन्ति मनुष्याणां पितृन् श्राद्धेन तर्पिताः ॥
अग्निष्वात्तादयस्तेषा माधिपत्येऽव्यवस्थिताः ॥

नागरखण्डे—

मनोर्हैरण्य गर्भस्य ये मरीच्यादयः सुताः ।
तेषा मृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः ॥
सुभास्वरा वर्हिषद अग्निष्वात्तास्तथैव च ।
त्रयोमूर्त्ति विहीनास्ते राजन् पितृगणा स्मृताः ॥
क्रव्यादाश्चोपहूनाश्च आज्यपाश्च सुकालिनः ।
मूर्त्तिमन्तः पितृगणाश्चत्वारः परिकीर्तिताः ॥

तर्पयन्ति न ये पापाः स्वान् पितॄन्नित्यशो नृप ।
पशवस्ते नराज्ञेया द्विपदाः श्रृंग वर्जिताः ।।
जलेनापि च न श्राद्धं शाके नापि करोति यः।
अमायां पितरस्तस्य शापन्दत्वा प्रयान्ति च ।।
पितृलोक स्थितानां च स्वर्गस्थानामपि क्षुधा ।
पिपासा च तथा राजन् तेषां संजायतेऽधिका ।।
पितरः पर्वकालेषु तिथिकालेषु देवताः ।
सर्वे पुरुष मायान्ति निपानस्येव धेनवः ।।
पूजकानां सदोत्कर्षो नास्तिकानामधोगतिः ।
देवास्तु दायिनो यान्ति तिर्यग्गच्छन्त्य दायिनः ।।

बृहस्पति स्मृतौ—

संस्कृतं व्यञ्जनाढ्यं च पयो मधु घृतान्वितम् ।
श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते ।।

श्राद्ध शब्दार्थः ।

नागरखण्डे—

श्राद्धे श्रद्धा यतो मूलं तेन श्राद्धं प्रकीर्तितम् ।
तस्मिन्प्रक्रियमाणे तु न किंचित् व्यर्थतां व्रजेत् ।।
देशे काले च पात्रे च विधिना हविषा च यत् ।
तिलैर्दर्भैश्च मंत्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ।।

बौधायनः—

श्रद्धया बोध्यते बुद्धिः श्रद्धया शोध्यते मनः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पाप विमोचनी ।।

यम स्मृतौ—

विधिहीनममृष्टान्नं मंत्रहीनमदक्षिणम् ।
अश्रद्धया हुतं दत्तं तद् वैरक्षांसि भुञ्जते ।।

# अथ श्राद्धकाल निर्णयम् ।

गरुड़पुराणे—

विश्वं सृजत्य वत्यत्ति कालात्मैव जनार्दनः ।
अतोर्थं काल मेवेह परमं कारणं विदुः ।।
न हि काल मनाश्रित्य लोके वेदेपि कुत्रचित् ।
विधयः प्रति षेधाश्च सम्भवन्ति विशाम्पते ।।
काल एव ततः साध्यः साधनं पुण्य पापयोः ।
तस्मात् कर्म्माणि पुण्येषु कुर्य्यात् कालेषु धार्म्मिकः ।।
ना काले विदुषां किंचित् कर्त्तव्य मिति निश्चयः ।।

देवीपुराणे—

नित्यो विभुः स्थितः कालोह्यवस्थास्तस्य हेतुजाः ।
निमित्तादि विशेषै सः लोके पुण्य फलप्रदः ।।

अयमर्थः । कालो नित्यः तस्य हेतुजाः अवस्थाः पूर्वाह्न मध्याह्न अपराह्न दिवस क्षपा पक्ष मास ऋतु अयन सम्वत्सरादि रूप विभागात्मिकाः । हेतुः रवि परिस्पन्द प्रचय विशेष रूपोपाधिभेदः तज्जाः तद वच्छेद निबन्धनाः । ताश्चास्य नित्य नैमित्तिक काम्य कर्म्माङ्गत्वोपाधिभेदेन त्रिविधाः । अतोयं कालो नित्यो नैमित्तिकः काम्य इति त्रिधा व्यपदिश्यते । सोयमेवं त्रिधा विभक्तः पुण्यफलप्रदः । अथ शतपथ श्रुतिः । वसन्तो ग्रीष्मो वर्षाः ते देवा ऋतवः । शरद् हेमन्तः शिशिरस्ते पितरो य एवा पूर्यतेऽर्द्धमासः सदेवा योऽपक्षीयते स पितरोऽहरेवदेवा रात्रिः पितरः पुनरह्नो पूर्वाह्ने देवा अपराह्नः पितर इति । अत्रोत्तरायण दक्षिणायन शुक्लकृष्णपक्षाहोरात्र पूर्वाह्ना पराह्न विभागेन देव पितृ सम्बन्धः कालस्योच्यते ।

अतएवाह हारीतः—

सम्वत्सरः प्रजापति स्तस्योद गयनं शुक्लोऽहः पूर्वाह्णश्च देवानाम् ।
दक्षिणायनन्तामिस्रो राऽयपराह्णश्च पितृणाम् ।

तथाच स्कान्दे—

आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्ण स्ततः परमिति ॥

आङ् मर्यादायाम्। आवर्त्तनात् छायायाः परिवर्त्तनं मर्यादीकृत्य यः कालः सः पूर्वाह्णः। अतो दैव पित्र्य रूप पूर्वाह्णा पराह्णात्मक काल व्यामिश्रत्वाद्दैव पित्र्यरूपत्वेन देवाश्च पितरश्चोभयथा पूर्वाह्णा पराह्ण विभागेना हरहः प्रतिदिन मिज्यन्ते त्यज्यमानस्य हव्यस्य कव्यस्य चोद्देश्य त्वं प्रार्थयन्ते प्राप्यन्ते।

तथाच याज्ञवल्क्यः—

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयन द्वयम्।
द्रव्यं ब्राह्मण सम्पत्ति र्विषुवत् सूर्य संक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्र सूर्य्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥

स्कन्दपुराणे—

राकाचानुमतिश्चैव पौर्णमासी द्विधा स्मृता।
सिनीवाली कुहूश्चैव अमावास्या द्विधैवतु ॥

तयोश्च लक्षणं श्रुतौ—

या पूर्वा पौर्णमासी सानुमतिर्योत्तरासा राका।
या पूर्वा मावास्या सासिनी वाली योत्तरासा कुहूः।

अत्र चतुर्दशीमिश्रा सिनीवाली त्युक्तं भवति। अस्यां च त्रिमुहूर्ताधिक चतुर्दशी मिश्रायां चन्द्रो भवति। इति ज्योतिर्विद् वचनात् प्रापिकं चन्द्रोदयोपलक्षितेय मित्यभि प्रेत्याह व्यासः।

दृष्ट चन्द्रासिनी वाली नष्ट चन्द्रा कुहू स्मृता।
सिनीवाली सदा पित्र्ये कुहूर्दैवेतु कर्म्मणि ॥

विष्णु धर्म्मोत्तरे—

तेषां मास महोरात्र विभागं तत्र मे शृणु।
कृष्णपक्षाष्टमी मध्ये तेषां तूदयते रविः ॥

शुक्लाष्टम्यां तथैवास्तं तेषां याति दिवाकरः ।
अमावास्या सदा तेषां मध्याह्नो जायते नृप ॥
तस्माच्छ्राद्धानि देयानि तस्मिन् काले प्रयत्नतः ।
वासरस्य तृतीयेंऽशे नाति सन्ध्या समीपतः ॥

बौधायनः—

मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्त्तते ।
सिनीवाली तु सा ज्ञेया पितृकार्य्येषु निष्फला ॥

बृहस्पतिः—

मध्याह्नात् या त्वमावास्या परस्तात्सम्प्रवर्त्तते ।
भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत् ॥
भूत विद्धाममावास्यां मोहादज्ञानतो पिबा ।
श्राद्ध कर्म्माणि ये कुर्य्यु स्तेषा मायुः प्रहीयते ।

अनेनापराह्न व्यापिचेत् सिनीवाली तर्ह्येवसाग्राह्या अन्यदा तु कुहूरेव ग्राह्येत्युक्तं भवति ।

तदाह हारीतः—

अपराह्नः पितृणां तु यापराह्नानुयायिनी ।
सा ग्राह्या पितृकार्य्ये तु न पूर्वास्तानुयायिनी ॥

बौधायनः —

घटिकै काप्यमावास्या पूर्वाह्न व्यापिनी यदि ।
भूत विद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्वदा ॥

जावालः—

प्रतिपत् खप्य मावास्या पूर्वाह्नव्यापिनी यदि ।
भूत विद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्वदा ॥

व्यासः—

अपराह्ने पितृणान्तु यापराह्नानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाह्नानुयायिनी ॥

गोभिलः—

पूर्वाह्णं प्रहरं सार्द्धं मध्याह्णं प्रहरं तथा ।
आ तृतीया दपराह्णं सायाह्णं च ततः परम् ॥

प्रभासखण्डे । पराशरोपि—

मुहूर्त्त त्रितयं प्रात स्तावानेव च सङ्गवः ।
मन्धाह्ण स्त्रिमुहूर्तः स्यात् अपराह्णोपि तादृशः ॥
सा याह्ण स्त्रिमुहूर्त्तोंथ सर्व कर्म्म वहिष्कृतः ॥

गौतमः पार्वण विषयमाह—

प्रारभ्यकु तपे श्राद्धं कुर्य्यादारोहिणात् बुधः ।
विधिज्ञो विधिमास्थाय रोहिणं तु न लंघयेत् ॥

रोहिणं नवमो मुहूर्तः—

मत्स्यपुराणे । एकोद्दिष्ट विषयम्—

मध्याह्णे सर्वदा यस्मात् मन्दी भवति भास्करः ।
तस्मादनन्त फलदस्तत्रारम्भो विशिष्यते ॥

अतएव मत्स्यपुराणे । पार्वण मङ्गीकृत्य कुतपात् प्रभृति मुहूर्त पञ्चकस्य श्राद्धाङ्गत्व मुक्तम्—

मुहूर्त्तात् कुतपादूर्ध्वं यन्मुहूर्त्त चतुष्टयम् ।
मुहूर्त्त पंचकं ह्येतत्स्वधा भवन मिष्यते ॥

प्रभासखंडे—

चतुर्थे प्रहरे प्राप्ते श्राद्धे यः कुरुते नरः ।
आसुरं तत् भवेच्छ्राद्धं दाता च नरकं व्रजेत् ॥

बौधायनः—

दिवसस्यान्तिमे भागे मन्दी भूते दिवाकरे ।
आसुरं तत् भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

## अथ भाद्रपदा परपक्षः

आदित्यपुराणे—

प्रावृट् ऋतौ यमः प्रेतान् पितृंश्चा ऽथयमालयात् ।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतं तेस्वयं कृतम् ।
काङ्क्षन्ति पुत्र पौत्रेभ्यः पायसं मधु संयुतम् ॥
तस्मात्तान् तत्र विधिना तर्पयेत् पायसे न तु ।
मध्वाज्यतिलमिश्रेण तथा शीनेन वारिणा ॥
ग्रास मात्रं परगृहादन्नं यः प्राप्नुयान्नरः ।
भिक्षा मात्रेण यः प्राणान् संधारयति वा स्वयम् ॥
यो वा संधारयेद्देहं प्रत्यहं स्वात्म विक्रयात् ।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसंचितैः ॥

नागरखंडे पितृन्प्रति ब्रह्म वचनम्—

आषाढ्याः पञ्चमे पक्षे कन्या संस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे ॥
तस्य सम्वत्सरं यावत्तृप्तास्युः पितरो ध्रुवम् ॥

आह वृद्ध मनुः—

मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते ॥
प्रतिपत् प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हताये वै तेषां तत्र प्रदीयते ॥

आदित्यपुराणे—

आषाढी मवधींकृत्य यः स्यात्पक्षस्तु पञ्चमः ।
श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छति वानवा ॥

ब्रह्मपुराणे—

सूर्ये कन्या गते कुर्य्यात् श्राद्धं यो न गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृ निश्वास पीडया ॥

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ।।
यावच्च कन्या तुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्यात् शून्यं प्रेत पुरं तदा ।।

मनुस्मृतौ—

यत् किञ्चिन्मधुना मिश्रं प्रदद्यातु त्रयोदशीम् ।
तदप्यक्षय मेवस्मात् वर्षा सु च मघा सु च ।।

यमः—

गाथाश्च पितृ भिर्गीताः कीर्तयन्ति पुराविदः ।
अपिनः स्वकुले भूयात् योनो दद्यात् त्रयोदशीम् ।।
पायसं मधु सर्पिभ्यां वर्षा सु च मघा सु च ।।

मघा त्रयोदश्यां पितृभ्यः पायसादीन् दद्यात् किन्तु श्राद्धं न कुर्यात् । अत्र पितृ शाप भयात् निषेध वचनानि दृश्यन्ते ।

ज्योतिर्बृहस्पतिः—

कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयात् ज्येष्ठ पुत्रस्य निश्चितम् ।।

षट्त्रिंशन्मते—

गृही त्रयोदशी श्राद्धं न कुर्य्यात् पुत्र वा नपि ।
उपवासं च संक्रान्तौ ग्रहणे चंद्र सूर्य्ययोः ।।
त्रयोदश्यान्तु वै श्राद्धे न कुर्य्यात्पुत्रवान् गृही ।
नेष्यते चोपवासश्च कैश्चिदप्ययने द्वये ।।

स्कान्दे नागरखंडे । अग्निवेश्म उवाच शिष्यान् प्रति—

ऋक्षे पैत्रे यदा चंद्रो हंसश्चैव करेस्थितः ।
त्रयोदश्यान्तु सा छाया विज्ञेया कुञ्जराह्वया ।।
श्राद्धेष्वति प्रशस्ता सा पितॄणां तृप्तिकारिणी ।
तत्प्रातः श्राद्ध सम्भाराः संभ्रियन्ता मतः शुभाः ।।

तस्य तद्वचनं श्रुत्वा ते चान्ये च जना भुवि ।
नभस्य च त्रयोदश्यां श्राद्धं चक्रुर्मुदान्विताः ॥
प्रापुश्च परमां सिद्धिं स्पर्द्धमाना सुरोत्तमैः ।
ईषालव स्ततस्तेषु वसु रुद्रादयः सुराः ॥
अशपंश्च त्रयोदश्यां श्राद्ध कर्तॄन् क्षुधान्विताः ।
अद्य प्रभृतियः श्राद्धं त्रयोदश्यां करिष्यति ॥
कन्या संस्थे सहस्रांशौ तस्य स्यात् वंश संक्षयः ।
इति शापेन देवानां निर्दग्धेयं महातिथिः ॥
ततः प्रभृति नैतस्यां क्रियते श्राद्ध मुत्तमम् ।
यः प्रमादेन कुरुते तस्य स्यात् वंश संक्षयः ॥
एतत् त्रयोदशी श्राद्धं वंशच्छेदस्य कारणम् ।
अतः श्राद्धं विनादेयं तद्दिने मधु पायसम् ॥
तस्याभावे प्रदातव्यं क्षीरोदन मनुत्तमम् ।
तस्मिन्नहनि विप्रेभ्यः पितृणां तुष्टये नृप ॥
तस्याभावेपि दातव्यं जलं तिल विमिश्रितम् ॥

आह मरीचिः—

विष शस्त्र श्वापदाहि तिर्य्यग् ब्राह्मण घातिनाम् ।
चतुर्दश्यां क्रिया कार्य्या अन्येषां तु विगर्हिता ॥
वृक्षारोहण लोहाद्यैर्विद्युद् ज्वाला विषादिभिः ।
नखदंष्ट्रैर्विपन्नानां तेषां शस्ता चतुर्दशी ॥

नागरखंडे—

येषां च शस्त्र मृत्युःस्यादपमृत्यु रथापि वा ।
उपसर्गात् मृतानां च विष मृत्यु मुपेयुषाम् ॥
वह्निना च प्रदग्धानां जलं मृत्यु मुपेयुषाम् ।
सर्प व्याघ्र हतानां च शृंगैरुद् बंधनै रपि ॥
श्राद्धं तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप ॥

आहगार्ग्यः—

चतुर्दश्यान्तु यच्छ्राद्धं सपिण्डी करणात्परम् ।
एकोद्दिष्ट विधानेन तत् कार्य्यं शस्त्रघातिनः ॥

मनुः—

एकपिण्डी कृतानांतु पृथक्त्वं नोपजायते ।
सपिण्डी करणा दूर्ध्वं मृते कृष्ण चतुर्दशीम् ॥

भविष्यपुराणे—

समत्व मागतस्यापि पितुः शस्त्र हतस्य तु ।
एकोद्दिष्टं सुतैः कार्य्यं चतुर्दश्यां महालये ॥

स्मृत्यन्तरे—

एकस्मिन् पितरि पितामहे वा शस्त्रादिना हते पित्रादि त्रय मध्ये द्वयोर्वा शस्त्रादिना हतयोश्चतुर्दश्यामेकोद्दिष्ट विधिना प्रत्येकं श्राद्धं कार्य्य मित्यर्थः । द्वयोरेकोद्दिष्ट विधानेन प्रत्येकं श्राद्धे कृतेपि प्रपितामह तृप्ति सिद्ध्यर्थं दिनान्तरे पार्वणं श्राद्धं कार्य्यम् । पित्रादिषु त्रिष्वपि शस्त्रादिना हतेषुनैकोद्दिष्ट विधिरिति गम्यते ।

विष्णुः—

सन्ध्या रात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्यात् राहु दर्शनम् ॥

बौधायनः—

पराधीनः प्रवासी च निर्धनो वापि मानवः ।
मनसा भाव शुद्धेन श्राद्धं दद्यात्तिलोदकम् ॥

आहोशना —

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।
सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते ॥

स्मृत्यन्तरे—

आब्दिके समनु प्राप्ते यस्य भार्या रजस्वला ।
पञ्चमेहनि तच्छ्राद्धं न कुर्य्यात्तन्मृतेहनि ॥

अपुत्रा तु यदा भार्या सम्प्राप्ते भर्त्तुराब्दिके।
रजस्वला भवेत्साहि तत् कुर्य्यात्पंचमेहनि ॥

आह व्यासः—

श्राद्ध विघ्ने समुत्पन्ने अन्तरामृत सूतके।
अमावास्यां प्रकुर्वीत शुद्धा वेके मनीषिणः ॥

अन्तरामृत सूतके-श्राद्ध प्रयोग मध्ये पाकोपक्रमात् प्राक् मृतके सूतके वाजाते अमावास्यायां वा शुद्धयनन्तरं श्राद्धं कार्य्यम्। पाकारम्भे स तितु पाकारम्भ प्रभृत्या कर्म्म समाप्ते राशौ चाभाव:। एतत् श्राद्ध कर्त्तुर्गृहादन्यत्र सपिण्डानां गृहे आशौ च जात विषयो ज्ञायते। यथा—

शेषमन्नं परैर्देयं दातृन् भोक्तृंश्च नस्पृशेत्।

दातुर्गृहविषये। उक्तं ब्रह्मपुराणे—

भोजनार्द्धे तु सम्भुक्ते विप्रैर्दातु र्विपद्यते।
यदा कश्चित्तदोच्छिष्ट शेषंत्यक्त्वा समाहितः ॥
आचम्य परकीयेन जलेन शुचयो द्विजाः ॥

ऋष्यशृङ्ग;—

तिथिच्छेदो न कर्त्तव्यो बिना शौचं यदृच्छया।
पिण्डं श्राद्धं च दातव्यं विच्छित्तिं नैव कारयेत् ॥

अथ क्षयाहा परिज्ञाने साम्वत्सरिक श्राद्धकाल:।

भविष्यपुराणे अरुण प्रश्नोत्तर माहादित्य:—

मृताहं यो न जानाति मानवो विनितात्मज।
ते न कार्य्य ममावास्यां श्राद्धं साम्वत्सरं नृप ॥

बृहस्पति:—

न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति।
मासश्चेत् प्रति विज्ञातस्तद्दर्शेस्यान्मृताहनि ॥
यदामासो न विज्ञातो विज्ञातं दिनमेव तु।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत् ॥

प्रभासखण्डे—

मृतस्याहो न जानाति मासं वापि कथंचन ।
तेन कार्य्यममावास्यां श्राद्धं माघेऽथ मार्गके ॥

यस्य तु प्रोषितस्य मरण वार्ता तज्जीवन वार्त्तापि नागता पञ्चदश वर्ष पर्यन्तमागमनं नास्ति तस्य तदूर्द्धं पालाशीभिः समिद्भिः कुशैर्वा शरीरप्रतिकृतिं कृत्वा यथा विधि दाह स्कारं निर्वर्त्य तदानीन्तन पक्ष मास तिथिरुपृष्टे ह्नि । साम्वत्सरिकं कर्त्तव्य मित्याह जातूकर्ण्यः—

पितरि प्रोषिते यत्र न वार्त्ता नैव चा गतिः ।
ऊर्द्धं पंचदशात् वर्षात् कृत्वा तु प्रतिरूपकम् ॥
कुर्य्यात्तस्य च संस्कारं यथोक्त विधिना ततः ।
तदादीन्येव सर्वाणि शेष कर्म्माणि संचरेत् ॥

## अथैकोद्दिष्ट विषयम् ।

शिवरहस्य-ब्रह्मवैवर्त्त-सौर नारदीयपुराणेषु—

दर्शे च पौर्णमासे च पितुः साम्वत्सरं दिनम् ।
पूर्व विद्धमकुर्वाणो नरकं प्रतिपद्यते ॥
अपराह्ण द्वय व्यापिन्यती तस्य यदा तिथिः ।
क्षये पूर्वा तु कर्त्तव्या वृद्धि कार्ये तथोत्तरा ॥

मनुः—

पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम् ।
एकोद्दिष्टं तु मध्याह्णे प्रातर्वृद्धि निमित्तकम् ॥

हारीतः—

आमश्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धि निमित्तिकम् ॥

वृद्धगौतमः—

मध्याह्न व्यापिनी यास्यात् सैकोद्दिष्टे तिथिर्भवेत् ।
तस्यां पितृभ्यो दातव्यं ह्रास वृद्धी न कारणम् ॥

ब्रह्मपुराणे—

प्रति सम्वत्सरं कार्य्यं माता पित्रोर्मृताहनि ।
पितृव्यस्याप्य पुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

प्रभासखण्डे-भविष्यत्पुराणे च—

सर्वेषा मेव श्राद्धानां श्रेष्ठं साम्वत्सरं मतम् ।
क्रियते यत् खगश्रेष्ठ मृतेहनि बुधैः सदा ॥
मृतेहनि पितुर्यस्तु न कुर्य्याच्छ्राद्ध मादरात् ।
मातुश्च खगशार्दूल वत्सरान्ते मृतेहनि ॥
नाहं तस्य खगश्रेष्ठ पूजा गृह्णामि नोहरिः ।
न ब्रह्मा नच वै रुद्रो न चान्ये देवतागणाः ॥
तस्मात् यत्नेन कर्त्तव्यं वर्षे वर्षे मृतेहनि ।

आह नारदीयपुराणे वसिष्ठः—

पारणे मरणे नृणां तिथि स्तात्कालिकी स्मृता ।
पूर्वाह्णिकास्तु तिथयो देवकार्य्ये फलप्रदाः ॥
अपराह्णिकास्तथा ज्ञेयाः पित्रर्थे तु शुभावहाः ॥

तदे तत् अधिमास विषयमाह हारीतः—

यस्मिन् राशौ गते सूर्य्ये विपत्तिं याति मानवः ।
तद्राशावेव कर्त्तव्यं पितृ कार्य्यं मृताहनि ॥
अधिमासे विपत्तिश्चेत् सौरमानं समाश्रयेत् ।
स एव दिवसस्तस्य श्राद्ध पिण्डोदकादिषु ॥

व्याख्यातो मासः अस्यार्द्धं पक्षः तिथिस्तु चान्द्रमहोरात्रम् ।

आह भृगुः—

एक राशि स्थिते सूर्य्ये यदा दर्श द्वयं भवेत् ।
हव्य कव्य क्रिया हन्ता तदा ज्ञेयोधिमासकः ॥

सुमन्तुः—

न कुर्य्यादधिके मासि कर्म्मी कर्म्म कदाचन ।
मलं वदन्ति कालस्य मासं काल विदोऽधिकम् ॥

गृह्य परिशिष्ठे—

मलिम्लुचस्तु मासो वै मलिनः पाप सम्भवः ।
गर्हितः पितृ देवेभ्यः सर्व कर्म्मसु संत्यजेत् ॥

मत्स्यपुराणे—

चंद्र सूर्य्य ग्रहे चैव मरणे पुत्र जन्मनि ।
मलमासेपिदेयंस्याच्छ्राद्धमक्षयकारकम् ॥

काठक परिशिष्टे—

प्रेत संस्कारमारभ्य श्राद्ध पिण्डोदक क्रिया ।
सपिण्डी करणान्ताश्च यथा काल मुपस्थिता ॥
यव व्रीहि तिलैर्होमो जातकर्म्मादिकाः क्रियाः ।
मघा त्रयोदशी श्राद्धं प्रत्युपस्थित हेतुकम् ॥
अनन्यगति कत्वेन कर्त्तव्यं स्यान्मलिम्लु चे ॥

पैठीनसिः—

मलमास मृतानां च श्राद्धं यत् प्रति वत्सरम् ।
मलमासेपि कर्त्तव्यं नान्येषां च कदाचन ॥

यमः—

आब्दिके प्रथमं यत् स्यात्तत् कुर्वीत मलिम्लु चे ।
त्रयोदशेतु सम्प्राप्ते कुर्वीत पुनराब्दिकम् ॥

लघुहारीतः—

प्रत्यब्दं द्वादशे मासि कार्य्या पिण्ड क्रिया द्विजैः ।
क्वचित् त्रयोदशेपिस्यादाद्यंमुक्त्वातु वत्सरम् ॥

यदाह पुलस्त्यः—

अयन द्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्ड निर्वपणाद्दते ।।

ब्रह्मपुराणे—

अयन द्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रांतिषु च सर्वासु पिण्ड निर्वपणा दृते ।।

अथ साम्वत्सरिक श्राद्ध निर्णयम् ।

जावालिः—

उपराग सहस्राणि अमावास्या युतानि च ।
अक्षयं तु भवेच्छ्राद्धं यस्तु दद्यान्मृतेहनि ।।

अकरणे दोषमाह कार्ष्णाजिनिः—

ऊषरे तु यथा क्षिप्तं वीजं न प्रति रोहति ।
तथा च तद्भवेत्तेषां यन्न दत्तं मृताहनि ।।

ब्रह्मांडपुराणे—

सम्वत्सरे केचिदे कस्मै दानं त्रिभ्यः परे जगुः ।
अतः स्मृत्य विरोधेन निर्णयं श्रोतुमर्हथ ।।

यमः—

सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतः ।
एकोद्दिष्टं प्रकुर्वीत पित्रोरन्यत्र पार्वणम् ।।

व्यासः—

सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
तत्र तत्र त्रयं कार्य्यं वर्जयित्वा मृताहनि ।।
प्रति सम्वत्सरं यत्र माता पित्रोः प्रदीयते ।
अदैवं भोजयेच्छ्राद्धं पिंडमेकं च निर्वपेत् ।।

शातातपः—

संक्रात्या वुपरागे च पर्वोत्सव महालये ।
निर्वपेत् त्रीन् सुतः पिण्डानेकमेव क्षयेहनि ।।

आपस्तम्बः—

एकस्य प्रथमं श्राद्धमर्वागब्दाच्च मासिकम् ।
प्रति सम्वत्सरे चैव शेषं त्रिपुरुषं विदुः ।।

गार्ग्यः—

कृते च सह पिण्डत्वे गणसामान्यतां गते ।
प्रति सम्वत्सरं श्राद्धमेकस्यैव विधीयते ।।

यमः—

एकोद्दिष्टं परित्यज्य पार्वणं कुरुते यदि ।
अकृतं तत् विजानीयात्समात् पितृ घातकः ।।

मृताहनि पार्वण विधानानि वचनान्यपि दृश्यन्ते । शातातपः—

प्रदानं यत्र यत्रैषां सपिण्डी करणात्परम् ।
तत्र पार्वण वच्छ्राद्धं ज्ञेयमभ्युदयार्थिना ।।
ये सपिण्डी कृताः प्रेता न तेषान्तु पृथक् क्रिया ।
न पृथक् पिण्डदानन्तु तस्मादूर्ध्वं विधीयते ।।
प्रेतत्वात् चेह निस्तीर्णाः प्राप्ता पितृगणांस्तुतं ।
यः सपिण्डी कृतं प्रेतं पृथक् पिण्डे नियोजयेत् ।।
विधिघ्नस्तेन भवति पितृहा चोप जायते ।।

पुलस्त्यः—

एकोद्दिष्टं तु कर्त्तव्यं यावत्पित्रोः सपिण्डनम् ।
ततः सपिण्डना दूर्ध्वमेकोद्दिष्टं निवर्त्तते ।।

प्रजापतिः—

असपिण्डी कृताः प्रेता नेकोद्दिष्टे न वर्त्तयेत् ।
सपिण्डी करणादूर्ध्वं त्रिभिः सामान्य मुच्यते ।।
एकस्य प्रथमं श्राद्धमर्वागब्दाच्च मासिकम् ।
परं सं नयनात्पित्रोर्मृताहन्यपि पार्वणम् ।।

तथैव पारस्करः–शम्भुः–जातूकर्ण्यः ।

भविष्य पुराणेपि—

ततः सम्वत्सरे पूर्णे सपिण्डी करणे कृते ।
निराशाः पितरो यान्ति एकस्या वाहने कृते ।।

शातातपः—

सपिण्डी करणं कृत्वा कुर्य्यात्पार्वण सदा ।
प्रति सम्वत्सरं विद्वान् छागलेयो दितो विधिः ।।

जमदग्निः—

देवतारहितं श्राद्ध मुद्दिष्टमफलं यतः ।
अतः श्राद्धेषु सर्वत्र मृताहन्यपि पार्वणम् ।।

भविष्यत्पुराणे—

एकोद्दिष्टं प्रशंसन्ति केचित् राजन्मृताहनि ।
केचित्तु पार्वणं राजन् प्रशंसन्ति मृताहनि ।।
कृत्वा च पार्वणं श्राद्धमेकोद्दिष्टं न कारयेत् ।
कुर्वन्नरक मायाति विशेषाच्च मृताहनि ।।
प्रेतः प्रयोजितो वीर नियुक्तः पितृभिः सह ।
न वर्त्तते क्षणमपि यथा मात्रा बिना सुतः ।।
बालवत्सं यथा मात्रा वियोज्य नरकं व्रजेत् ।
तथा प्रेतं वियोज्याशु एकोद्दिष्टेन मानवः ।।
अब्दमेकं प्रकुर्वीत एकोद्दिष्टं मृताहनि ।
ततः परन्तु सन्नीते पार्वणं स्यान्मृताहनि ।।

गार्ग्यः—

समान्ते पितृभिः प्रेतं योजयेत् पितरं सुतः ।
तदादि पार्वणं श्राद्धं मृता हन्यपि नान्यथा ।।

श्रुतिरपि—

मासिमाम्पृता वृतौ प्रति हेमन्त ग्रीष्म वर्षा सु प्रति सम्वत्सरे च देवाश्च पितरश्च सहास्ता मिति। विश्वेदेवाः पितृ पितामहादयश्च श्राद्धं भोक्तुं सहतिष्ठन्तीत्यर्थः।

अतएवाह सुमन्तुः—

कर्त्तव्यं पार्वणं राजन्नैकोद्दिष्टं कदाचन।
बहूनि अत्र वाक्यानि मुनि गीतानिवक्ष्यते॥
अल्पेतराणि राजेन्द्र एकोद्दिष्टं प्रचक्ष्यते।
तस्माद्वचन सामर्थ्यात् पार्वणं स्यान्मृताहनि॥

अयमेवार्थो जैमिनिनाप्युक्तः—

विप्रतिपिद्ध धर्म्म समवाये भूयसां स्यात् सधर्म्मत्वं तदेवं वचन द्वैधे सति विषय व्यवस्था कर्त्तव्या। अतएवाह जावालः—

श्रुति द्वैधंतु यत्रस्यात्तत्र धर्म्मा वुभौ स्मृतौ।
स्मृति द्वैधेतु विषयः कल्पनीयः पृथक् पृथक्॥

यत आह मनुः—

न पैतृ यज्ञियो होमो लौकिकेग्नौ विधीयते।
न दर्शेन विना श्राद्ध माहिताग्ने द्विजन्मनः॥

दर्शेन। दर्शो पलक्षितेन विधिना वर्जितं श्राद्धं आहिताग्निना न कर्त्तव्यमित्यर्थः। नतु दर्श श्राद्धं विनाऽन्यत् श्राद्धमेव न कर्त्तव्य मिति व्याख्येयम्। तस्य त्वयाह श्राद्धादेरप्य भाव प्रसंगात्।

आह मनुः—

वह्वग्न यश्च ये विप्रा ये चैकाग्नय एवच।
तेषां सपिण्डनादूर्ध्व मेकोद्दिष्टं न पार्वणम्॥

अत्रैकोद्दिष्टं नेति सम्बन्धः।

अतएवाह कार्ष्णाजिनिः—

अग्नि प्रधानं सर्वेषामनुष्ठानं गृहाश्रमे।
तद्योगात् कृत सामर्थ्याः सर्वत्रार्हन्ति पार्वणम्॥

भविष्यत्पुराणेतूभयोर्व्यवस्था चोक्ता—

वर्षे वर्षे तु कुर्य्याद्वै पार्वणं योग्निमान् द्विजः ।
कुर्य्यादनग्निमान् वीर एकोद्दिष्टं मृताहनि ।।
निरग्ने रौरस्योक्त मेकोद्दिष्टं मृताहनि ।
प्रत्यब्दं पार्वणं साग्नेरन्येषां तु न पार्वणम् ।।

मनुः—

ये नास्य पितरो याता येन याताः पितामहाः ।
तेनया यात्सतां मार्गं तत्र गच्छन्न दुष्यति ।।

गार्ग्यः—

प्रमीत पितृकः श्राद्धं पर्वकाले यथाविधि ।
मृताहनि यथारुच्या वृद्धावभ्युदिता क्रिया ।।

मृताहनि पार्वणन्तु साग्नेरेव निरग्नेस्तु एकोद्दिष्टं पार्वणं वा विकल्पः । तथापि येषां परम्परया पार्वणमेव कुरुते तैस्तदेव कर्त्तव्यं येषामेकोद्दिष्टं क्रियते तैरेकोद्दिष्ट मेवेति ।।

पुलस्त्यः—

पर्वकाले मृताहश्च यद्ये कत्र द्वयं भवेत् ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचनः ।।
अमायां वा क्षयो यस्य प्रेतपक्षेथवा भवेत् ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन ।।
प्रेतपक्षे प्रमीतस्य पितुः कुर्वीत पार्वणम् ।।

अन्वारोहण विषये तु दम्पति श्राद्ध माह लौगाक्षिः—

मृताहनि समासेन पिण्ड निर्वपणं पृथक् ।
नव श्राद्धं च दम्पत्यो रन्वारोहण एव तु ।।

समासेन—संक्षेपेण पिण्ड निर्वपणम् । यथा द्विपितृक श्राद्धे द्वयोः पित्रोरमुकनाम्ने अमुक नाम्ने चेत्तूद्दिश्य एक एव पिण्डो दीयते तथाहाप्ये-

कस्मिन्पिण्डे द्वयोर्माता पित्रोरमुकायामुकायै चेत्युद्देशं कृत्वा एक एव पिण्डो देयः। एतच्च श्राद्ध मनेकोद्देश्य शालित्व रूपात् लिङ्गात् पार्वण धर्म्मकम्। तेनात्र वैश्वदेविकं तंत्रेण कार्य्यम्। पृथक् नवश्राद्धं च दम्पत्यो रिति। नवश्राद्ध-प्राग्दशाहात् नवश्राद्ध दिनेषु क्रियमाणं श्राद्धं पृथक् पितुर्मातुः कार्य्यम्।

यत्तुगार्ग्येणोक्तम्—

एकचित्यां समारूढौ दम्पती मरणं गतौ।
पृथक् श्राद्धं तयोः कुर्य्यादोदनं च पृथक् पृथक्॥

ओदनं—ओदनपिण्डः। तत्तु नवश्राद्ध विषयं नतु साम्वत्सरिक विषयमपीति न पूर्व वचन विरोधः।

## अथ श्राद्ध देशाः।

पृथ्वी चन्द्रोदये विष्णुधर्म्मे—

दक्षिणा प्रवणे देशे तीर्थादौ च गृहेपि वा।
भू संस्कारादि संयुक्ते श्राद्धं कुर्य्यात्प्रयत्नतः॥

स्कान्दे—

तुलसी काननच्छाया यत्र यत्र भवेत् द्विज।
तत्र श्राद्धं प्रदातव्यं पितृणां तृप्ति हेतवे॥

आह देवलः—

श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती।
कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च॥
नदी तटेषु तीर्थेषु शैलेषु पुलिनेषु च।
विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहा॥

शङ्खस्मृतौ—

गङ्गा यमुनयोस्तीरे पयोष्ण्य मरकण्टके।
नर्म्मदा वाहुदा तीरे भृगुलिङ्गे हिमालये॥

गंगाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायां च दत्तमक्षयतां व्रजेत् ॥

पितृगाथा—

अपि जायेत योस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटेश्राद्धं योनो दद्यात्समाहितः ॥
एष्टव्या वहवः पुत्रा यद्येकोपि गया व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

अथ निषिद्ध देशाः । स्कान्दे—पृथ्वी चन्द्रोदये च—

त्रिशंकोर्वर्जयेत् देशं सर्वं द्वादश योजनम् ।
उत्तरेण महानद्याः दक्षिणेन तु कीकटात् ॥
देशस्त्रैशंकवो नाम श्राद्ध कर्म्मणि वर्जितः ॥

वायुपुराणे—

कारस्कराः कलिंगाश्च सिन्धोरुत्तर मेव च ।
प्रणष्टाश्रम धर्म्माश्च देशा वर्ज्याः प्रयत्नतः ॥

ब्रह्मपुराणे—

परकीय गृहेयस्तु स्वान् पितॄन् तर्पयेज्जडः ।
तद्भूमि स्वामिनस्तस्य हरन्ति पितरो वलात् ॥

यमस्मृतौ—

परकीय प्रदेशेषु पितॄणां निर्वपेत्तुयः ।
तद्भूमि स्वामि पितृभिः श्राद्ध कर्म्म विहन्यते ॥
अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।
सर्वाण्य स्वामिकान्याहुर्नहि तेषु परिग्रहः ॥
रूक्षं क्रमियुतं क्लिन्नं संकीर्णा निष्ट गंधिकम् ।
देशं त्वनिष्ट शब्दं च वर्जयेच्छ्राद्ध कर्म्मणि ॥

इति श्राद्धे निषिद्ध देशाः ।

अथ श्राद्धयोग्याभूमिः । विष्णु धर्म्मोत्तरे—

गोमयेनोप लिप्तेषु श्राद्धं कार्यं गृहेषु च ।
मनोज्ञेषु विचित्रेषु रुचिरेषूत्तमेषु च ॥
उद्यानेषु विचित्रेषु सैकतेषु समेषु च ॥

पद्मपुराणे—

तीर्थायतन गोष्ठेषु द्वीपोद्यान गृहेषु च ।
विविक्ते पूपलिप्तेषु श्राद्धं देयं विजानता ॥

यमः—

दक्षिणा प्रवणं स्निग्धं विविक्तं शुभ लक्षणम् ।
शुभं देशं परीक्ष्याशु गोमये नोप लेपयेत् ॥

मनुः—

शुचिं देशं विविक्तं च गोमये नोप लेपयेत् ।
दक्षिणा प्रवणं चैव प्रयत्ने नोप पादयेत् ॥

विविक्तः विस्तीर्णः वहुभिर्जनैरना कीर्णश्च । दक्षिणा प्रवणः- दक्षिणस्यां दिश्य वनतः । तादृशं देशं प्रयत्नेन सम्पादयेत् ।

आह विष्णुः—

संवृते च श्राद्धं कुर्य्यात् न रजस्वलां पश्येन्न श्वानं न विड्वराहं न ग्राम्य कुक्कुटं प्रयत्नात् श्राद्धमजस्य दर्शयेत ।

इति भू विचारः ।

## अथेष्टा पौर्त्तिक कर्म्म शुद्ध्यर्थ-गोष्ठ दैविक यात्रार्थ-पौष्ठिक काम्य श्राद्धानां प्रयोगः ।

तत्र भविष्योत्तरे—

इष्टा पूर्त्तादिके श्राद्धं वृद्धिश्राद्ध वदाचरेत् ।

पारस्करः—

निषेक काले सोमेच सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत् कृतम् ॥

आह प्रचेताः—

क्रियते शुद्धये तत्तु ब्राह्मणा नान्तु भोजनम् ।
शुद्ध्यर्थं मिति तत्प्रोक्तं श्राद्धं पार्वणवत् कृतम् ।।

भविष्यत्पुराणे—

गोष्ठ्यां यत् क्रियते श्राद्धं तत् गोष्ठ्यं श्राद्धमुच्यते ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ।।

भविष्योत्तरे—

उत्पातादि निमित्तेषु नित्यश्राद्धं सदैव तु ।
देवांस्तूद्दिश्य विश्वादीन् प्रदद्यात् द्विज भोजने ।।
तन्नित्य श्राद्धवत् कार्य्यं दैवश्राद्धं तदुच्यते ।।

अथ पितृ तीर्थयात्रा विधिः । कूर्मपुराणे—

कथयिष्यामि ते वत्स तीर्थयात्रा विधि क्रमम् ।
आर्षेण तु विधानेन यथा दृष्टं यथा श्रुतम् ।।
पूर्वेद्युः कृतसंकल्पः पूजयित्वापितृन्सुरान् ।
हुतशेष भुगव्यग्रो ब्रह्मचारी च भूशयः ।।
अपरेद्युः शुचिः स्नातः कृताशीः कृत मंगलः ।
अभिवन्द्यगुरून् वृद्धान् ग्रामे कृत्वा प्रदक्षिणम् ।।
प्रतिष्ठेत्सुमना भूत्वा इष्टान् देवाननुस्मरन् ।।

स्कान्दे-प्रभासखण्डे—

स्थानं प्रदक्षिणी कृत्य वाग्यतः सुसमाहितः ।
नियतो नियताहारी गच्छे चैव ततः पथि ।।

आह धर्म्मः—

यात्रा श्राद्धं नरः कुर्वन् विधिना पार्वणे नतु ।
असाध्य नियमं मुक्त्वा कुर्य्यात्सर्वं समाहितः ।।

गयामधिकृत्य ब्रह्मवैवर्त्ते—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कर्पटी वेषं ग्रामस्यापि प्रदक्षिणम् ।।

ततो ग्रामान्तरं गत्वा श्राद्ध शेषस्य भोजनम् ।
कृत्वा प्रतिदिनं गच्छेत् प्रतिग्रह विवर्जितः ॥

अत्र श्राद्ध दिन एव ग्रामान्तरं गत्वा श्राद्ध शेषस्य भोजन मित्येत-स्यार्थस्य गयाधिकारेणाभि हितस्य पूर्व प्रदर्शित कूर्मपुराण वचन प्रति पादितस्य श्राद्धोत्तर दिन प्रस्थानस्य गया यात्रा व्यतिरिक्त विषयत्व मव सेयम् । असाध्व नियमं मुक्त्वा इत्ये तत् धर्म वचनं सामान्याभिधायि वचनत्वात् गयातीर्थ विषय एवोप संह्रियत इति विवेकः ।

असाध्व नियमं मुक्त्वेत्यस्य श्रीसनशील मार्गे नियमं विहायेत्यर्थः ।

आदित्यपुराणे—

प्रत्यागतश्चाथ गृहं पुनस्तु देवान्पितॄन् ब्राह्मणान् पूजयेच्च ।
एवं कुर्वंस्तस्य तीर्थाद्यदुक्तं फलं तत्स्यान्नात्र सन्देह कोस्ति ॥

पारस्करः—

शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थ मिति तत्प्रोक्तं श्राद्धं पार्वणवत् कृतम् ॥

इति तीर्थयात्रा विधिः ।

---

## अथ तीर्थ श्राद्धम् ।

ब्राह्मणानुज्ञोक्ता प्रभासखण्डे—

तीर्थे विप्रवचो ग्राह्यं स्नान श्राद्धार्चनादिषु ।

मत्स्यपुराणे—

स्नात्वा नदीषु सर्वासु पितॄन् देवांश्च तर्पयेत् ।
तत्र तत्र यथावित्तं कुर्य्यात् श्राद्धादिकं तथा ॥
अकालेप्यथ वा काले तीर्थ श्राद्धं सदा नरैः ।
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥

नदीष्विति तीर्थमात्रोपलक्षणं । श्राद्धादिकं । श्राद्ध दान जपादिकं विशिष्टं कर्म । यथा वित्त मित्यनेन सत्यां शक्तौ विशिष्टयान्नादि सम्पदा तदभावे यथा सम्पन्न येति प्रतिपाद्यते । काले—अमावास्याष्टका संक्रान्त्यादि रूप विशिष्टे काले अकाले—अविशिष्टे निषिद्धेतरस्मिन् शुक्ल-प्रतिपदादि रूपेवा—नपुनर्निषिद्धेऽपिरात्र्यादौ ।

अतएव प्रभासखण्डे—

श्राद्धं सपिण्डकं कुर्य्यात् स्वतंत्रोक्त विधानतः ।
आमंत्र्य ब्राह्मणां स्तत्र शास्त्रज्ञान्दोषवर्जितान् ॥
यात्रागतैर्नरैर्देवि तत्र क्षेत्र निवासिनः ।
ब्राह्मणाः प्रथमं पूज्या दैवे पित्र्ये च कर्म्मणि ॥

पद्मपुराणे—

तीर्थेषु ब्राह्मणं नैव परीक्षेत कथंचन ।
अन्नार्थिन मनु प्राप्तं भोजयेन्मनुशासनात् ॥

प्रभासखण्डे—

येषु तीर्थेषु ये विप्रा ये देवा याश्च मातृकाः ।
तेषु तान्नात्रमन्येत यदीच्छेज्जीवितं चिरम् ॥

पद्मपुराणे—

श्राद्धं तत्र तु कर्त्तव्यमर्घ्या वाहन वर्जितम् ।
श्वध्वांक्ष गृध्रकाकाद्या घ्नन्ति दृष्ट्वानतत्क्रियाम् ॥
अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठ निवेशनम् ।
विकिरं तृप्तिप्रश्नं च तीर्थ श्राद्धेपि वर्जयेत् ॥

चमत्कारखण्डे—

पिण्डदानं तथा शस्तं पितृणां चाति वल्लभम् ।
पितरोहि निरीक्षन्ते गोत्रजं स्वमुपागतम् ॥
आशया परयायुक्ता स्तामाशां तेषु पूरयेत् ।
विलम्बो नैव कर्त्तव्यो नैव क्षिप्रं समाचरेत् ॥

पद्मपुराणे—

सक्तुभिः पिण्डदानं स्यात् सयवैः पायसेनवा ।
कर्त्तव्य मृषिभिर्दिष्टं पिण्याकेनेङ्गुदेन वा ॥
पिण्याकेन तिलानां वा भक्तिमद्भिर्नरैः सदा ॥

विष्णु धर्म्मोत्तरे—

तीर्थ श्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः ।
दक्षिणाभिमुखो भूत्वा पित्र्यादिक् या प्रकीर्त्तिता ॥

महाभारते गयामधिकृत्य—

केशश्मश्रु नखादीनां वपनं च न शस्यते ।
अतो न कार्य्यं वपनं गयाश्राद्धार्थिना सदा ॥
ये भारतेस्मिन् पितृकर्म्म तत्पराः
सन्धार्य्य केशानभिभक्ति भावतः ।
ऋणक्षयार्थं पितृ तीर्थमागता
स्तेषा मृणं संक्षय मेष्यति ध्रुवम् ॥
वित्तशाठ्यं न कुर्वीत गयां प्राप्य सदा नरः ।
वित्तशाठ्यं हि कुर्वाणो न तीर्थफलभाग्भवेत् ॥

वाराहपुराणे—

यदि पुत्रो गयां गच्छेत् कदाचित् काल पर्ययात् ।
तानेव भोजयेत् विप्रान् ब्राह्मणा ये प्रकल्पिताः ॥
तेषु तुष्टेषु सन्तुष्टाः पितृभिः सह देवताः ।
अमानुषा गयाविप्रा ब्राह्मणा ये प्रकल्पिताः ॥
पितृरूपान् गयाविप्रान् पूजयित्वा समाहितः ।
सर्व पाप विशुद्धात्मा स्वर्गलोके महीयते ॥
न विचार्य्यं कुलं शीलं विद्यां च तप एव च ।
पूजितैस्ते तु सन्तुष्टा देवाः सपितृ गुह्यकाः ॥
तेषां हस्ते च दत्तं वै गयायां च विशेषतः ।
तदक्षयं भवेत्तस्य पितृणां नात्र संशयः ॥

ब्रह्मवैवर्त्ते—

गयाशीर्षे वसेन्नित्यं स्नानं फल्गवी समाचरेत् ।
गयाशीर्षे सदापिण्डमेतत् स्वर्गेपि दुर्लभम् ॥

फल्गुतीर्थे नरः स्नात्वा देवं दृष्ट्वा गदाधरम् ।
गयाशिरः परिक्रम्य मुच्यते ब्रह्महत्यया ।।

महाभारते—

ततो निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
कामान् सलभते दिव्यान् स्वर्गद्वारन्तु तत्स्मृतम् ।।
सवर्णा ज्ञातयो मित्रा बान्धवाः सुहृदश्च ये ।
तेभ्यो भूप गयाभूमौ पिण्डा देया विधानतः ।।
पुत्रेभ्यो दौहित्रेभ्योपि कनिष्ठेभ्योपि सर्वशः ।
ये मृताश्चान्य जन्मानः पिण्डान् तेभ्योपि निर्वपेत् ।।
तेपि यान्ति दिवं सर्वे पिण्डे दत्ते इति श्रुतिः ।
अज्ञातनामगोत्राणां मंत्र एष प्रकीर्त्तितः ।।
पितृवंशसमुत्पन्ना मातृ वंशे तथैव च ।
गुरु श्वशुर बन्धूनां ये चान्ये बान्धवा द्विजाः ।।
येमे कुले लुप्तपिण्डाः पुत्रदार विवर्जिताः ।
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।।
क्रियालोप गता ये च ये चान्ये गर्भ संस्थिताः ।
तेभ्यो दत्तो मया पिण्डो ह्यक्षय्य मुपतिष्ठताम् ।।
ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।
सर्वे ते निष्कृतिं यान्ति गयायां पिण्ड पातनात् ।।
ब्रह्मघ्नश्च सुरापश्च बालवृद्ध गुरूद्रुही ।
नाशमायाति वै पापं गयाया मनुयातियः ।।
अपि तत्र क्षिपेत् पिण्डं निधानी भूत मात्मनः ।
आत्मनस्तु महाबुद्धे गयायान्तु तिलैर्विना ।।
आत्मजो वाथ वान्योपि गयाकूपे यदा तदा ।
यन्नाम्ना पातयेत् पिण्डं तन्नयेत् ब्रह्म शाश्वतम् ।।
मकरे वर्त्तमाने तु ग्रहणे चन्द्र सूर्य्ययोः ।
दुर्लभं त्रिषुलोकेषु गयायां पिण्ड पातनम् ।।

अत्र पिण्ड पातन श्राद्धादिषु यानि प्रशस्तानि स्थानानि उक्तानि तेषु गयाशिरस्य विष्णुपाद पूर्वकेषु पिण्डदानादिकं कर्त्तव्यम् ।

भविष्यत्पुराणे—

अनेनैव विधानेन गत्वा चोत्तर मानसम् ।
आचम्य कुश हस्तस्तु शिरः सिक्त्वास्य वारिणा ॥
अध्रुव स्थान मध्ये तु गच्छेत् कनक संज्ञितम् ।
तत्राचम्य शिरः सिक्त्वा ब्रूयादादित्य मीक्ष्यतु ॥
गयायां शिरसो नत्वा स्नात्वा पैतामहं पदम् ।
दृष्ट्वा स्नानं प्रविश्याथ श्राद्धं कुर्य्यात् यथा विधि ॥
गयाशिरस्ये तत् कुर्य्याच्छ्राद्ध पिण्डौ चतुर्थके ।
पञ्चमे दिवसे गच्छेद्वटमक्षयसंज्ञकम् ॥
गयावटेपि च स्नायात् कृत्वा तर्पण मेव च ।
वटवृक्ष तले श्राद्धं ततः कुर्य्या द्विधानतः ॥
तत्राक्षयवटो नाम त्रिषुलोकेषु विश्रुतः ।
पितॄणां तत्र यद्दत्तमक्षयं तद्भवेद्ध्रुवम् ॥
वटमूलं समाश्रित्य शाकेनाप्युदकेन वा ।
एकस्मिन् भोजिते विप्रे कोटि र्भवति भोजिता ॥
देहत्यागो निवासश्च गयायान्तु विधीयते ।
श्राद्धं पिण्डोदके चैव पूर्वं पूर्वं प्रशस्य ते ॥
उदीच्यां मुण्ड पृष्ठस्य नदी कनक संज्ञिता ।
तत्र स्नात्वा प्रकुर्वीत श्राद्धं पिण्ड समन्वितम् ॥
तावच्च कृतकृत्यः स्यान्मुच्यते स ऋणैस्त्रिभिः ।
सुषुम्नायां पुष्करिण्यां श्राद्धमक्षय मुच्यते ॥
मानसे सरसि स्नात्वा श्राद्धंकृत्वा ततो ब्रजेत् ।
तीरे देवगृहं तत्र पितृ मात्रादिकं जपेत् ॥
उत्तरे मानसे श्राद्धं ततः कुर्य्याद्यथा विधि ।

कामान् स लभते दिव्यान् मोक्षोपायञ्च विन्दति ॥
यत्फलं सन्निहत्यायां राहुग्रस्ते दिवाकरे ।
फलं तदखिलं प्रोक्तं गयायां तु दिने दिने ॥
अबन्धुभ्योथ बन्धुभ्यः कन्याबालेभ्य एव च ।
यन्नाम्ना पातयेत्पिडं गयायां ब्रह्म तं नयेत् ॥
गयाश्राद्धं मृतानान्तु पूर्णे त्वब्दे प्रशस्यते ।
जीवतामपि वैदद्यात् पिण्डानात्मन एव च ॥
नाम गोत्रेषु तान्पिण्डान् दद्याच्छ्राद्धे तिलैर्विना ।
जीवतां मृतकानां वा तिला श्राद्धे न गर्हिताः ॥
यमुद्दिश्य गयायाञ्च वृषं नीलं समुत्सृजेत् ।
समोक्षमश्नुते प्रीत उत्सृष्टोपि तथैव च ॥
बलिष्ठं रूपसम्पन्नं दृढं सर्वाङ्ग सुन्दरम् ।
यादृशं तादृशं वापि गयायां वृष मुत्सृजेत् ॥
शूलेन निर्दहेत् पार्श्वे वामे चक्रेण निर्दहेत् ।
अङ्कितं स्नापयेत्पश्चात् स्नातं विधिवदुत्सृजेत् ॥
इत्युक्तं वो गया श्राद्धं कुर्य्याच्छक्त्यनुसारतः ।
अतिक्रम्य स दुर्गाणि परं ब्रह्माधि गच्छति ॥

इति गया श्राद्धम् ।

---

द्वारवतीमधिकृत्य स्कन्दपुराणे—

स्नानं कृत्वा ततो देवान् पितृन्सन्तर्पयेन्नरः ।
श्राद्धं कुर्य्यात् विधानेन श्रद्धया परया युतः ॥
पञ्चरत्नं ततो देयं सदाधान्यं द्विजातये ॥

अन्यच्च—

तर्पयेत् पितृ देवांश्च मनुष्यांश्च यथा क्रमम् ।
ततः श्राद्धं प्रकुर्वीत पितृणां श्रद्धयान्वितः ॥

दद्याच्च दक्षिणां तत्र वित्त शाठ्यं विवर्जयेत् ।
विशेषतः प्रदेयानि फलानि रसवन्ति च ॥
देयौ श्यामाकनीवारौ विद्रुमं चाजिनानि च ।
सप्तधान्यं शालयश्च सक्तवश्च गुडैर्युताः ॥
गन्धमाल्यानि ताम्बूलं वस्त्राणि च तथा पयः ।
सफलं जन्म मर्त्यस्य जीवितञ्च सुजीवितम् ॥

इति तीर्थश्राद्ध प्रयोगः ।

## अथ पार्वणमधिकृत्य निमंत्रण प्रकरणम् ।

प्रचेताः स्मृतिः । प्रभासखण्डेपि—

सवर्णं प्रेषयेदाप्तं द्विजाना मुपमंत्रणे ।
सवर्ण शब्दोऽत्र सजातीयोपलक्षणार्थः ॥
असवर्ण प्रेषणे दोष माह नारायणः ॥
अभोज्यं ब्राह्मणस्यान्नं क्षत्रियाद्यैर्निमंत्रितम् ।
तथैव क्षत्रियादीनां वृषलेन निमंत्रितम् ॥

शूद्राद्यन्न भोजनार्थं ब्राह्मणेन तु निमंत्रणे दोषोऽयं शातातप स्मृति प्रभासखण्डेषूक्तः—

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमंत्रितम् ।
तथैव वृष लस्यान्नं ब्राह्मणेन निमंत्रितम् ॥

अत्र पूर्वोक्ता देव हेतोर्ब्राह्मण शब्दस्य भिन्नोत्तम जात्युपलक्षणत्वं वेदितव्यं । यत्तु स्मृति चंद्रिका कारेणोक्तं सवर्णाभावेत्व सवर्णमपि शूद्र व्यतिरिक्तं निमंत्रणाय प्रेषयेदिति तन्नारायण प्रोक्त वचन विरोधादुपेक्षणीयम् । निमंत्रणाय च प्रेषणीयेषु साधुषु सर्वेषु सुतशिष्यादयोन्तरङ्गाः । स्वयं शिष्योथवा सुतः । इति बृहस्पति वचने विशेषतस्तदुपदेशात् । शिष्यादपि सुतोऽन्तरङ्गः यथैवात्मा तथा पुत्र इत्यादि दर्शनात् ।

## अथ निमंत्रणीय ब्राह्मण संख्या ।

नारायणः—

अयुजो भोजयेत् श्राद्धे न समा दैविके समाः ।
दैवे युग्मान् यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ॥

गौतमः—

नवावरान् भोजयेदयुजोवा यथोत्साहमूर्ध्वं त्रिभ्यो गुणवन्तमिति।

नवभ्यः संख्याधिक्येन वराः वरिष्ठा दशादि संख्यकाः तद्व्यतिरिक्ता अवरा इत्यर्थः तेन नव प्रभृत्ययुजो भोजयेत् इत्युक्तं भवति । अन्ये तु गौतम वचनमेवं व्याचक्षते । नव अवराः संख्यया कृत्वा न्यूनाः येषु ते नवावराः तद्गुण संविज्ञानो बहुव्रीहिः । इयं च पित्रादि त्रयस्थाने त्रिषु त्रिषु निमंत्रितेषु सङ्कलनतया नव ब्राह्मणाः संपद्यन्ते स चायं अवरः पक्षः ।

वसिष्ठः —

द्वौ दैवे पितृ कृत्येत्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोपि विस्तरं तु विवर्जयेत् ॥

मनु–शातातप–बौधायन–स्मृति–पद्मपुराणेष्वप्युक्तः—

द्वौ दैवे पितृ कृत्येत्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोपि न प्रसज्येत विस्तरे ॥

बृहस्पतिः—

एकैकमथवा द्वौ त्रीन् दैवे पित्र्ये च भोजयेत् ।
सत्क्रिया काल पात्रादि न सम्पद्येत विस्तरात् ॥

धर्म्मः—

पंचभिः पंचभिर्विप्रैः द्वाभ्यां द्वाभ्यामथापि वा ।
श्राद्धं देयं त्रिभिर्वास्या देके नैवाथ वा पुनः ॥

नवावरेष्वपि संख्या विशेषार्थमाह अयुज इति । अयुजः विषम संख्यान् । तेनैकै कस्य स्थाने नवसप्त पंचत्रीन् वा एकैकं निमंत्रयेत्। उत्तम पक्षे एकैकस्य स्थाने नव मध्यम पक्षे सप्त किंचित् हीन मध्यमपक्षे

पंचहीनपक्षे त्रीन्हीनतरपक्षे एकंहीनतमपक्षे पित्रादि त्रयाणाम् एकम्।

अति समृद्धं प्रत्यधिकाभ्यनुज्ञार्थं माह। वा यथात्साहमूर्ध्वमिति। उत्साहः शक्तिः साचेत् तर्हि ऊर्ध्वं पूर्वोक्त संख्याया उपरिष्टात्। ततश्च यथाशक्ति अधिकानपि भोजये दित्युक्तं भवति। यत्र पित्रादि त्रयस्थाने एकस्यैव निमंत्रणं तत्र गुण विधानार्थ माह त्रिभ्यो गुणवन्त मिति पित्रादि त्रयस्यार्थे गुणवन्तं अध्यात्म विद्यादि सर्वोत्कृष्ट गुणयुक्तं भोजयेत्। अत्र ब्राह्मण बाहुल्येपि सत्क्रिया देश काल शौच गुणवत् ब्राह्मण सम्पादन समर्थेन समृद्ध तमेन यजमानेन पित्रादि वर्गे सप्तविंशतिः माता महादि वर्गे सप्तविंशति रित्यमावास्यादौ चतुःपंचाशद् ब्राह्मणाः सम्पादनीयाः। सुसमृद्ध तरेण तु पित्रादि वर्गे एकविंशतिः मातामहादि वर्गे चैकविंशति रित्येवं द्विचत्वारिंशत्सम्पादनीयाः। सुसमृद्धेन तु पित्रादि वर्गे पंचदश माता महादि वर्गे पंचदशेत्येवं त्रिंशत् सम्पादनीयाः। समृद्धेन तु पित्र्यद्वयेष्टादश मध्यम समृद्धिना तु षट् दरिद्रेण द्वौ दरिद्रतमेन त्वेक इत्येवं सम्पादनीयाः। अत्रोत्तमादि पक्षेषु यथौ चित्यं क्रमेण दशाष्ट षट् चतुर्द्वि एक संख्या ब्राह्मणा निमंत्रणीयाः। तत्र वैश्व देविकैक ब्राह्मण पक्षः पित्र्यैक ब्राह्मण पक्षः। इयं च वैश्वदेविक ब्राह्मण संख्या मावास्यादि श्राद्धेषु वैश्वदेविक तंत्रानुष्ठान पक्षे वेदितव्या। पृथक् वैश्वदेविकानुष्ठान पक्षेतु द्वैगुण्ये नेति।

मनुः—

पूर्वेद्युरपरेद्युर्वा श्राद्ध कर्म्मण्युपस्थिते।
निमंत्रयीत त्र्यवरान् सम्यक् विप्रान्यथोदितान्॥

अत्र केचित् त्र्यवरा नित्येकै कस्य स्थाने एकैक इत्येवं पित्रादि त्रयस्य ब्राह्मणत्रय विधान मेत दित्याहुः। तद युक्तम्। द्वौ देवे पितृ कृत्येत्रीनिति स्वोक्ते पौनरुक्त प्रसङ्गात्।

अतएव पैठीनसिः। श्वःश्राद्धं करिष्यामीति संकल्प्य ब्राह्मणान् सप्त पंच वा निमंत्रयेत्। अत्र पित्रादेरेकैकस्य स्थाने सप्त सप्त पञ्च पञ्च वा निमंत्रणीया इत्ये तौ पक्षा वाह पैठीनसिः। सर्वेषां ब्राह्मण संख्या

विकल्पानां मध्ये एकैकमथवा एकैकमुभयत्र वा इति सत् क्रियाद्यभिघातकत्वात् विस्तार निंदाभिप्रायः । अतएव सत् क्रियादि विघातकत्वेन विस्तार निंदा कूर्म पुराणोक्ता—

सत्क्रियां देश कालौ च शौचं ब्राह्मण सम्पदम् ।
पञ्चैतान् विस्तरोहन्ति तस्मान्ने हेत विस्तरम् ॥

विस्तरः—ब्राह्मण बाहुल्यम् एतान् पञ्च पदार्थान् हन्ति नाशयति तस्मात्तं नेहेत न कुर्य्यात । यस्तु ब्राह्मण बाहुल्येपि सत्क्रियादि सम्पादन समर्थः स गौतमादि वचनोक्तं प्रथम कल्पिकं विस्तारपक्ष मेवाश्रित्य श्राद्धं कुर्य्यादित्यभिप्रायः । अतएव ब्रह्मपुराणे देश कालादि सम्पादना समर्थं प्रत्येव संक्षेप पक्षोभिहितः—

देशकाल धनालाभा देकैक मुभयत्र वा ।
शेषान् वित्तानुसारेण भोजयेदन्य वेश्मनि ॥

स पात्रक श्राद्धे तु ब्राह्मण वाहुल्यादोषो बहुतरो भवेत् । यथा—

श्राद्ध नाशो मौन नाशः श्राद्ध तंत्रस्य विस्मृतिः ।
उच्छिष्टोच्छिष्टमस्पर्शो निंदा दातुर्नभोक्तृषु ॥
वितण्डया परीवादो जल्पाश्चैव पृथग् विधाः ॥

अतो मौन नाशादि शंकया विस्तार निंदा कृता सा च श्राद्ध देशे एव शेषान् भोजयेदन्य वेश्मनि इति वचनात् गौतमादि पक्षमेवाश्रित्य श्राद्धं कुर्य्यात् । शेषानभ्यागत प्रतिवेश्यादीनवश्य भोजनीयान् । इत्यलं विस्तरात् । इति निमंत्रणीय ब्राह्मण संख्या ।

## अथ निमंत्रणम् ।

आह देवलः—

श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमंत्रयेत् ।
निरामिषं सकृत् भुक्त्वा सर्वभुक्तजने गृहे ॥
असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमंत्रयेत् ।
अज्ञाती न समानार्षान् अयुग्मानात्म शक्तितः ॥

अज्ञातीन् —यजमान भिन्नगोत्रान्। असमानार्षान्—भिन्नप्रवरान्। अयुग्मान्—विषमसंख्यान्।

याज्ञवल्क्यः—

निमंत्रयीत पूर्वेद्यु ब्राह्मणानात्मवान् शुचिः।
तैश्चापि संयतैर्भाव्यं मनोवाक्काय कर्म्मभिः॥

आत्मवान्—संयतेन्द्रियः क्रोधमदमात्सर्यादि वर्जितः।

मनुरप्याह—

पूर्वेद्युरपरेद्युर्वा श्राद्ध कर्म्मण्युपस्थिते।
निमंत्रयीत त्र्यवरान् सम्यग् विप्रान् यथोदितान्॥

पूर्वेद्युः—यदहः श्राद्ध कर्त्तव्यं ततः पूर्वस्मिन्नहनि अपरेद्युः–इति श्राद्ध दिने एव। विकल्पश्चात्र शक्त्यपेक्ष्यः। यो निमंत्रण प्रयुक्तान् नियमान् पूर्व दिनादारभ्य शक्नोति पालपितुं स पूर्वेद्यु र्निमंत्रणं कुर्यात् अशक्तस्तु तदहरेवेति।

भविष्योत्तरे—

पूर्वेद्युस्तद्दिने वास्यात् ब्राह्मणानां निमंत्रणम्।
न प्राप्नुवंति पितरः श्राद्धंहीननिमंत्रणम्॥

भविष्यपुराणे—

काषायं मलिनं वस्त्रं कौपीनं च परित्यजेत्।
अधौतं कारुधौतं च पूर्वेद्युर्धौत मेव च॥
दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद् भवेत्।
पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः॥

नागरखण्डे—

कुलाचार समोपेतान् गृहीत्वा चरणौ ततः।
प्रसादयेच्च सव्येन विश्वेदेवार्चने पुरा॥
युग्मानेव यथा शक्त्या मंत्रमेतदुदीरयेत्।
दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा॥

पादावादाय वैश्यो द्वौ शूद्रः प्रणति पूर्वकम् ।
आगच्छन्तु महाभाग विश्वेदेवास्तनौ तव ॥
भक्त्याहूता मया चैव त्वं चापि व्रतभाग् भव ।
एवं युग्मान्समा मंत्र्य वैश्वदेवकृते द्विजान् ॥
अयुग्मानपसव्येन पित्रर्थं चापि मंत्रयेत् ।
ब्राह्मणं च यथा शक्त्या एकैकस्य पृथक् पृथक् ॥
द्विजं मातामहानाम प्येष एव विधिः स्मृतः ।
ततः पादौ परिस्पृश्य द्विजस्येद मुदीरयेत् ॥
श्रद्धा पूतेन मनसा पितृभक्ति परायणः ।
पितामे तव कायेस्मिन्तथैव च पितामहः ॥
स्वपित्रा सहितोऽभ्येतु त्वं च व्रत परोभव ।
एवं पितॄन्समाहूय तथा मातामहानथ ॥
सव्यं कृत्वा नमस्कृत्य तान् विप्रान्स्वगृहं व्रजेत् ॥

इति पूर्व दिन कृत्यम् ।

---

## अथ पूर्वाह्ण कृत्यम् ।

तथाच श्रुतिः—

क्लिन्नदन्तः पितॄन् यजेत् ।
क्लिन्नदन्तः अपनीत मल लेपदन्तः ॥

अतएव प्रभासखण्डे—

उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।
दन्तानां काष्ठ संयोगो हन्ति सप्त कुलानि वै ॥

प्रचेता स्मृति—भविष्योत्तरयोः—

श्राद्धभुक् प्रातरुत्थाय प्रकुर्य्याद्दन्तधावनम् ।
श्राद्धकर्त्ता न कुर्वीत दन्तानांधावनं बुधः ॥

देवल स्मृति कूर्मपुराणयोः—

तिलानवकिरेत्तत्र सर्वतो बन्धये द्विजान् ।
आसुरोपहतं सर्वं तिलैः शुध्यं त्यजेन च ॥

देवलः—

तथैव यंत्रितो दाता प्रातः स्नात्वा सहाम्बरः ।
आरभेत नवैः पात्रै रन्नारम्भं च बान्धवैः ॥

अयमर्थः । स्नातः स्नातया परिहिता धावक धौत वाससा पत्न्या-सह शक्तियुक्तः स्वयमेव समस्त पाकारम्भं समाप्ती कुर्य्यात् । अशक्त-श्चेत् स्वयमारम्भमात्रं कृत्वा शेषं बान्धवैः स्वजनैः कारयेत् । पत्न्या स्वहस्तेन पाकः कर्त्तव्यः ।

चमत्कार खण्डे—

ततश्च अपयामास तदर्थं जनकोद्भवा ।
रामा देशात्स्वयं साध्वी विनयेन समन्विता ॥

देवल स्मृति-कूर्मपुराणयोः—

ततोऽन्नं बहु संस्कारं नैक व्यंजन भक्ष्यवत् ।
चोष्य पेय समृद्धं च यथाशक्ति प्रकल्पयेत् ॥

आह गौतमः—

शक्तितः प्रकर्षयेद् गुण संस्कार विधीनन्न स्येति । अन्नानां समी-चीन जाति रूप रस गंध स्पर्शवत्वं गुणाः । द्रव्य क्रियादिभिरतिशया धानं संस्कारः । एतयोर्विधीन् प्रकारान् यथाशक्ति प्रकर्षयेत् शक्त्यनु-सारेण प्रकृष्टान्सम्पादयेदित्यर्थः उक्तं हि कर्म्मारम्भे स्नानम ।

मत्स्यपुराणे—

नैर्मल्यं भाव शुद्धिश्च विना स्नानं न विद्यते ।
तस्मान्मनो विशुद्ध्यर्थं स्नानमादौ विधीयते ॥

नागरखण्डे—

पितृनुद्दिश्य यद् द्रव्यं ब्राह्मणेभ्यः प्रदीयते ।
स्नातै धौताम्बरैर्मर्त्यैस्तद्भवेत्तृप्तिदं महत् ॥

भविष्यपुराणे—

कर्त्तुः स्नानं भवेत्तीर्थे प्रातर्मध्याह्न एव तु ।
उष्णोदकेन वा शक्तः कुर्वीत सकृदेव तत् ॥

विष्णुः—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥

सत्यव्रतः—

बलं रूपं यशो धर्म्मो ज्ञानमायुः सुखं धृतिः ।
आरोग्यं पुष्टिमाप्नोति सम्यक् स्नानेन मानवः ॥

योग याज्ञवल्क्यः—

अगम्या गमनात्पापात् पापेभ्यश्च प्रतिग्रहात् ।
रहस्या चरितात्पापान्मुच्यते स्नान माचरन् ॥
यदेव स्नानं कुरुते विशुद्धेनान्तरात्मना ।
तेनैव सर्व माप्नोति विधि यज्ञ क्रिया फलम् ॥
मनः प्रसाद जननं रूप सौभाग्य वर्द्धनम् ।
शोक दुःस्वप्नहं स्नानं मोक्षदं ज्ञानदं तथा ॥
स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् ।
तस्मात् स्नानं निषेवेत श्रीपुष्टया रोग्य वर्द्धनम् ॥

स्नानभेदाः । दक्षः—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नान मुच्यते ।
तेषां मध्येतु यन्नित्यं तत्पुनर्भिद्यते त्रिधा ॥
मलापकर्षणं पार्श्वे समंत्रं तु जले स्मृतम् ।
सन्ध्या स्नान मुभाभ्यां तत् स्नान देशाः प्रकीर्तिताः ॥

मलापकर्षणम्–मृद्गोमयाभ्यां शरीरक्षालनम् । तत् पार्श्वे तटे ।
सन्ध्या स्नानम् मार्जनम्–तत् उभाभ्यां जल स्थलाभ्याम् कार्य्यम् ।

छागलेयः—पराशरोपि—

आग्नेयं वारुणं चैव तृतीयं ब्राह्म मेव च।
चतुर्थं चैव वायव्यं पंचमं दिव्य मुच्यते॥
आग्नेयं भस्मना स्नान मव गाह्यतु वारुणम्।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजोद्भवम्॥
काले वा यदि वा काले सूर्ये मेघ विवर्ज़िते।
तस्मिन्दृष्टे तु यत् स्नानं तद्दिव्य मिति चोच्यते॥

जावालः—

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम्।
आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः॥

ब्रह्मांडपुराणे—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नान मुच्यते।
तर्पणं तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम्॥

आपस्तम्बः—

अस्पृश्य स्पर्शने वान्ते अश्रुपाते क्षुरे भगे।
स्नानं नैमित्तिकं कार्यं दैव पित्र्य विवर्जितम्॥

योग याज्ञवल्क्यः—

तूष्णी मेवावगाहेत यदास्यादशुचिर्नरः।
आचम्य प्रयतः पश्चात् स्नानं विधि वदाचरेत्॥

गार्ग्यः—

कुर्य्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च।
नित्यं याहच्छिकं चैव यथारुचि समाचरेत्॥

व्यासः—

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।
नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु॥

मनुः—

न स्नानमाचरेत् भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहा जस्रं ना विज्ञाते जलाशये ॥

मार्कण्डेयः—

महानिशा द्वेघटिके रात्रौ मध्यमयामयोः ।
नैमित्तिकं तदा कुर्य्यात् काम्यं नतु मनागपि ॥

देवलः—

महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।

विश्वामित्रः—

महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः ॥

पैठीनसिः—

अपेयं हि सदा तोयं रात्रौ मध्यमयामयोः ।
स्नानं चैव न कर्त्तव्यं तथैवाचमनक्रिया ॥

षट्त्रिंशन्मते—

मूत्रोच्चारे* महारात्रौ कुर्य्यादा चमनं तु यः ।
प्रायश्चित्तीयते विप्रः प्राजापत्यार्द्ध मर्हति ॥

देवलः—

राहु दर्शन संक्रान्ति विवाहात्ययवृद्धिषु ।
स्नान दानादिकं कुर्यु र्निशि काम्य व्रतेषु च ॥

योगयाज्ञवल्क्यः । पराशरोपि—

ग्रहणोद्वाह संक्रान्ति यात्रार्त्ति प्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥
पुत्र जन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥

---

* पुरीषोत्सर्गः ।

व्यासः—

नद्यामस्त मिते स्नानं वर्जयेत् सर्वदा नरः ।
नद्यां स्नातो नदीमन्यां न प्रशंसेत्तु धर्म्मवित् ॥
चंद्रसूर्यग्रहे चैव यो वगाहेत जाह्नवीम् ।
सस्नातः सर्वतीर्थेषु किमर्थं मटते महीम् ॥

देवलः —

यथा स्नानं च दानं च सूर्य्यस्यग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥
चंद्रग्रहे अवस्पर्शे रवेः संक्रमणेषु च ।
नक्तमप्य वगाहेत सलिलं सरिदादिषु ॥
न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतम् ।
नान्यत्प्रशंसेत् तत्रस्थ तीर्थेष्वायत नेषु च ॥
गंगादि पुण्यतीर्थानि कृत्रिमादिषु संस्मरेत् ।
यत्र स्थानेषु यत्तीर्थं नदी पुण्यतमा च या ॥
तां ध्यायन्मनसा स्नाया दन्यत्रेष्ट विचंतनम् ।

योग याज्ञवल्क्यः ।

पादेन पाणिना वापि यष्ट्या वस्त्रेण चोदकम् ।
न हन्यान्नैव वादेच्च नच प्रक्षोभयेद्बुधः ॥
न कुर्य्यात् कस्यचित् पीडां कर्म्मणा मनसा गिरा ॥

मनुः—

नदीषु देवखातेषु तड़ागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥

गरुडपुराणे—

प्रादेशमात्रमुद्धृत्य तर्पयेद्देवमानुषान् ।
ततो गोश्रृङ्गमात्रं च पित्रादिभ्यो जलं क्षिपेत् ॥

ब्रह्मवैवर्त्ते—

नाभिमात्रे जले स्थित्वा कुर्य्यात् स्नानाङ्गतर्पणम् ।
स्नानाङ्गतर्पणं विद्वान् कदाचिन्नैव हापयेत् ।।

कश्यपः—

देवान् ऋषीन्मनुष्यांश्च शुचिः पितृगणानपि ।
स्नातः संतर्पयेत् विद्वांस्तदाधाराहि ते यतः ।।

वसिष्ठः—

नास्तिक्य भावाद्यः स्नात्वा न तर्पयति वै पितॄन् ।
पिबन्ति देहनिःस्रावं पितरोस्य जलार्थिनः ।।

दक्षः—

प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ।
सप्तजन्मकृतंपापं त्रिभिर्वर्षैर्व्यपोहति ।।

ततो देवर्षिपितृतर्पणं कृत्वा जलादव तीर्य्याहते धौते श्वेते वाससी पूर्ववत् परिदधीत ।

भृगुः—

ब्राह्मणस्य सितंवस्त्रं नृपते रक्तमुल्वणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ।।
एतत्साधारण समयानुकूलः न देव पित्र्ये कर्मणि ।

तथाच वसिष्ठः—

जप होमोपवासेषु धौतवस्त्रः सदा भवेत् ।
अलंकृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ।

आह प्रचेताः—

श्राद्ध कृत् शुक्लवासाः स्यात् ।

काषाय रक्तस्य निन्दामाह बौधायनः—

काषायवासाः कुरुते जप होम प्रतिग्रहान् ।
न तद्देव गमं भवति हव्य कव्येष्वशो हविः ।।

योग याज्ञवल्क्यः—

स्नानं दानं जपं होमं स्वाध्यायं पितृ तर्पणम् ।
नैकवस्त्रो द्विजः कुर्य्याच्छ्राद्धभोजनसत्क्रियाः ॥

गोभिलः—

एकवस्त्रो न भुञ्जीत न कुर्य्याद्देवतार्चनम् ।
न चार्चयेद्द्विजान्नान्यं कुर्य्यादेवं विधो नरः ॥
सव्यार्द्धंशात्परिभ्रष्ट कटिदेश धृताम्बरः ।
एकवस्त्रं तु तं विद्यात् दैवे पित्र्ये च वर्जयेत् ॥

विश्वामित्रः—

यज्ञोपवीते द्वेधार्य्ये श्रौते स्मार्त्ते च कर्म्मणि ।
तृतीयमुत्तरीयं च वस्त्राभावेतदिष्यते ॥

अथ कुशाहरणादयः ।

शालंकायनः–हारीतोपि––

नभो मासस्य दर्शेतु शुचिर्दर्भान्समाहरेत् ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥

कार्ष्णाजिनिः—

भुवन्तु शिथिली कृत्य खनित्रेण विचक्षणः ।
आदद्यात् पितृतीर्थेन हुं फट् हुं फट् सकृत् सकृत् ॥
विरंचिना सहोत्पन्नः परमेष्ठीति सर्गजः ।
नुद पापानि सर्वाणि मम स्वस्ति करो भव ॥

इति मंत्रेण पूर्वं सम्प्रार्थ्य कुशानुत्पाटयेत् ।

मार्कण्डेयः—

पवित्रेण हस्तेन कुर्य्यादाचमन क्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टन्तु वर्जयेत् ॥

कात्यायनः—शातातपः—कश्यपः—

जपे होमे तथा दाने स्वाध्याये पितृकर्म्मणि ।
अशून्यं तु करं कुर्य्यात् सुवर्णरजतैः कुशैः ।।

अत्रिः—स्मृत्यन्तरेऽपि—

उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके ।
धारणीये प्रयत्नेन ब्रह्मग्रन्थि समन्विते ।।
ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थि विधीयते ।
भोजने वर्त्तुलः प्रोक्ता एवं धर्म्मो न हीयते ।।

द्विगुणी कृतानां दर्भशिखानां पाशः प्रदक्षिणमर्द्धवेष्टनं विधाय पश्चाद् भागेन यदा प्रवेश्यते तदा वर्त्तुल ग्रन्थिः । यदा स एव प्रादक्षिण्येन समग्र वेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा ब्रह्मग्रन्थिः—

अनामिकाभ्यामेवैते पवित्रे ग्रन्थिसंयुते ।
धारयेद्दक्षिणेनैव पाणिना वा कुशग्रहः ।।

योग याज्ञवल्क्यः—

पवित्रे स्थेति मंत्रेण द्वे पवित्रे च कारयेत् ।
नान्तर्गर्भे कुशच्छिन्ने कौशे प्रादेश सम्मिते ।।

यज्ञपार्श्वः—

छिन्द्यात्प्रादेशमात्रन्तु मूलदेशे कुशद्वयम् ।
न नखेन न काष्टेन न लौहेन न मृण्मयैः ।।

कौशिकः—

सप्तपत्राः शुभादर्भास्तिलक्षेत्रसमुद्भवाः ।
ते प्रशस्ता द्विजातीनां दैवे पित्र्ये च कर्म्मणि ।।
अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ।।

हारीतः—

अछिन्नाग्रान्सपत्रांश्च समूलान्कोमलान् शुभान् ।
पितृदेव जपार्थं च समादद्यात् कुशान् द्विजः ॥

ब्रह्माण्डपुराणे—

छिन्नमूला ग्रहीतव्याः प्रस्तरार्थं कुशोत्तमाः ।
अग्निकार्ये च यागे च समूलान्परिवर्जयेत् ॥

यमः—

समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्म्मणि ।
वहिर्लूनाः सकृल्लूनाः सर्वत्र पितृकर्म्मणि ॥

वहिर्लूनाः—उपमूललूनाः । एकोद्दिष्टे तु समूलोदर्भः । अन्यत्सर्व पितृकर्म्मणि उपमूललूना दर्भा ग्राह्याः ।

अतएव ब्रह्मांडपुराणे—

उपमूले तथा लूनाः श्राद्धार्थं तु कुशाः स्मृताः ।

अत्रिः—

सपिण्डीकरणं यावत् ऋजुभिश्च कुशैः क्रियाः ।
समूलैश्चापि कर्त्तव्याः साग्रैः शुचि समाहितैः ॥

नारदीयपुराणे—

तर्पणादीनि कार्य्याणि पितृणां यानि कानिचित् ।
तानिस्युर्द्विगुणैर्दर्भैः सप्तपत्रैर्विशेषतः ॥

वर्ज्यानाह हारीतः—

पथिदर्भा श्चितौ दर्भाः ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिंडेषु षट्कुशान्परिवर्जयेत् ॥

हारीतः—

समित्पुष्पकुशादीनि श्रोत्रियः स्वयमा हरेत् ।
शूद्राहृतैः कुशैर्विप्रः कर्म्म कुर्वन्व्रजत्यधः ॥

यज्ञ पार्श्वः—

कुशाभावेतु काशाः स्युः काशाः कुशसमाःस्मृताः ।

वाराहपुराणे—तिलान्प्रति पितृवचनम्—

किं कार्यं यज्ञभागेन तिला एव भवन्तुनः ।
नामृते नापिनः कृत्यं तिलान्यदि लभामहे ।।
यस्तर्पणं च श्राद्धं च तिलपूतं करिष्यति ।
भक्ष्यां स्तिलमयांश्चापि भक्त्यानः संप्रदास्यति ।।
देय द्रव्याणि चान्यानि प्रदास्यन्ति तिलोदकैः ।
तस्य प्रजां धनं स्वर्गं प्रीता दास्यामहे वयम् ।।

अथ रजत महिमा—नन्दि पु० स्कन्द पु० ब्रह्मवैवर्त्ते नागरखण्डे—नारदीय पु० बाराह पु० प्रभासखण्डे च—

य इच्छेत्परमां तृप्तिं पितॄणां चाक्षयां गतिम् ।
तेन श्राद्धेषु यत्नेन रूप्यं देयं द्विजोत्तम ।।
अलाभे सति रूप्यस्य नामापि परिकीर्त्तयेत् ।
तुष्यन्ति पितरो राजन् कीर्त्तनात् रजतस्य च ।।
रूप्य हस्तेन दातव्यं यत् किंचित् पितृ दैवतम् ।
तेनस्युः पितरस्तृप्ताः यावदा भूत संप्लवम् ।।
तर्जन्या रजतं धृत्वा पितृभ्यो यत् प्रदीयते ।
अन्तोस्ति परमाणूनां तस्यान्तो नैव विद्यते ।।
राजतान्यर्घपात्राणि कारयेत् पितृ कर्म्मणि ।
तथा भोजनपात्राणि कुर्य्यात् रूप्यमयानि तु ।।
परिवेषणपात्राणि पिण्डपात्राणि चैव हि ।
रूप्येनैव प्रकुर्वीत पितृभक्तिपरो नरः ।।
एवं कृतन्तु यच्छ्राद्धं यत्र कुत्र स्थितेन हि ।
तद्गया श्राद्ध मेवस्यां नात्र कार्य्या विचारणा ।।
रजतं दक्षिणां दत्वा श्राद्धेषु प्रयतो नरः ।

आत्मानं च पितृंश्चैव नयति ब्रह्म शाश्वतम् ॥
रजतस्य कथावापि दर्शनं दान मेव च ।
अनन्त मक्षयं स्वर्ग्यं राजतं दान मेव च ॥
रजतेन समायुक्तं यद्यच्छ्राद्धेषु किंचन ।
तत्तदक्षय मित्युक्तं रहस्यं पितृभिः स्वयम् ॥
श्राद्धार्थोदका हरणे विशेषो महाभारते ।
उदका नयने चैव स्तोतव्यो वरुणः प्रभुः ॥

अत्र स्तुति स्वरूप विशेषानभिधानात् इमं मे वरुण इत्यादिना येन केन चित् वरुण दैवत्येन मंत्रेण स्तोतव्य इति गम्यते। तीर्थान्मणिका देर्वा समाहृतस्योदकस्य कार्य्यमाह ।

योग याज्ञवल्क्य:—

तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे ।
ततः कर्म्माणि कुर्वीत विहितानि च कानिचित् ॥

अथ देवता निरूपणम् । बृहस्पति स्मृतौ —

इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ।
नैमित्तिके कालकामौ काम्ये च धुरि रोचनौ ॥
पुरूरवा आर्द्रवश्च पार्वणे समुदाहृतौ ॥

शङ्खस्मृतौ--

इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके ।
नान्दीमुखे सत्यवसू काम्ये च धुरिरोचनौ ॥
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।
नैमित्तिके कालकामा विति सर्वत्र कीर्त्तयेत् ॥

## अथ श्राद्ध विधिः ।

शातातपः-भविष्यत्पुराणे—

एकोद्दिष्टन्तु यत् श्राद्धं तन्नैमित्तिक मुच्यते ।
तदप्य दैवं कर्त्तव्यमयुग्मानाशयेद् द्विजान् ॥

ब्रह्मपुराणे—

पार्वणं दैवपूर्वं स्यादेकोद्दिष्टं सुरैर्विना ।

नागरखण्डे-पितॄन्प्रति ब्रह्मवचनम्—

पितुः पितामहस्यैव तत् पितुश्च ततः परम् ।
समुद्देशेन दत्तेन ब्राह्मणेभ्यः प्रभक्तितः ॥
सर्वेषां स्यात् परा तृप्तिर्यावदा चंद्रतारकम् ।
तथा मातामहानां च पक्षे नास्त्यत्र संशयः ॥
त्रिभिः संतर्पितैस्तेपि तर्पितास्ते ममाज्ञया ।
युष्माकं तृप्तयेयश्च सुखोपायो भविष्यति ॥
सश्रूयतां महाभागा गदतो मम साम्प्रतम् ।
पितॄनन्नेनयेनैव समुद्दिश्य द्विजोत्तमान् ॥
तर्पयिष्यन्ति तेनैव पिंडान् दास्यन्ति चक्षितौ ।
तेनैव कर्म्मणा तृप्तिः शाश्वतीवो भविष्यति ॥

धौम्यः—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं ध्रुवम्

आह पुलस्त्यः—

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषान्तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृसूनवः ॥

ब्रह्माण्डपुराणे—

पार्वणं कुरुते यस्तु केवलं पितृहेतुतः ।
मातामहान्न कुरुते पितृहा स प्रजायते ॥

मत्स्यपुराणे-पिण्डान्वाहार्य्यं प्रयोगे—

षड्वत्तस्मात् हविः शेषात् पिण्डान् कृत्वा तथोदकम् ।
दद्यादुदकपात्रैस्तु सलिलं सव्यपाणिना ॥

अन्वष्टकासु वृद्धौ च प्रतिसम्वत्सरं तथा ।
अत्र मातुः पृथक् श्राद्ध मन्यत्र पतिनासह ॥
स्वभर्तृपिण्डमात्राभ्य स्तृप्तिरासां यतः स्मृता ।
स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम् ॥
पितामही च स्वेनैव स्वेनैव प्रपितामही ॥

षट्त्रिंशन्मते—

एकत्वं सागता भर्त्तुः पिण्डे गोत्रे च सूतके ।
न पृथक् पिण्डदानं तु तस्मात्पत्नीषु विद्यते ॥

विष्णु धर्म्मोत्तरे—

श्राद्धाह्नि प्रयतः स्नातः स्वाचान्तः सुसमाहितः ।
शुक्लवासाः समभ्यर्च्य नृवराहं जनार्दनम् ॥

श्राद्ध मारभेतेति शेषः ।

शिवपुराणे—

पूजयित्वा शिवं भक्त्या पितृश्राद्धं प्रकल्पयेत् ।
कृत्वा तु विधिवच्छ्राद्धं भुञ्जीत पितृसेवितम् ॥

अथ श्राद्ध सम्पदः ।

मनु–वसिष्ठ–यम–हारीत–शातातपाः—

अपराह्ण स्तिलादर्भा वास्तुसम्पादनं तथा ।
सृष्टिर्मृष्टि र्द्विजाश्चाग्र्याः श्राद्धकर्म्मसु सम्पदः ॥

वास्तु वेश्म तस्य सम्पादनं–
अविद्य मानस्योत्पादनं विद्यमानस्य च परकीयस्य क्रयाद्युपायेन स्वीकरणम् । सृष्टिः उत्सृष्टिः उत्सर्गस्त्यागः अकार्पण्येन व्यंजनादि दानमिति । मृष्टिः मार्जनं स्वादुता वा । अग्र्याः श्रोत्रियादि विशेषशालिनः ।

महाभारते । हव्य सम्पदः—

दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः ।
पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥

अत्राद्य पवित्र शब्देन मंत्रा जलादि गालनार्थं वस्त्रं वा कुशपवित्राणि वा। द्वितीय पवित्र शब्देन पावनं शुच्या चारतादि वा।

श्राद्ध सम्पदः। महाभारते—

श्राद्धस्य ब्राह्मणः कालः पात्रं दधि घृतं पयः।
सोमक्षयश्च मासश्च तदारण्यं युधिष्ठिर ॥

ब्रह्मपुराणे—

उपमूलं सकृल्लूनान् कुशांस्तत्रोपकल्पयेत्।
यवांस्तिलान् वृशीः कांस्य मापः शुद्धैः समाहृताः ॥
पार्णराजतताम्राणि पात्राणिस्युः समिन्मधु।
पुष्पधूपसुगन्धादि क्षौमसूत्रं च मेक्षणम् ॥
वृशी वृतियोग्यानि कुशादिनिर्मितान्यासनानि।
कांस्यं अग्नौ करणार्थं कांस्यमयं भाजनम् ॥

क्षौमसूत्रं–दुकूल सूत्रम्। मेक्षणम्। यज्ञियदारुमयीदर्वी। सुगन्धादीत्यत्रादि ग्रहणादक्षतदीपाच्छादनादिकं गृह्यते।

ब्रह्माण्डपुराणे—

यतिस्त्रिदंडी करुणा राजतं पात्र मेव च।
दौहित्रः कुतपः कालश्छागः कृष्णाजिनं तथा ॥
गौराः कृष्णा स्तथा रण्या स्तथैवत्रिविधास्तिलाः।
पितॄणां तृप्तये सृष्टा दशैते ब्रह्मणा स्वयम् ॥

विष्णुः। कुतुप–कृष्णाजिन–सिद्धार्थाक्षतानि पात्राणि रक्षोघ्नानि वा दद्यात्।

आह मनुः—

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोध मत्वराम् ॥

पद्मपुराणे—

पितॄणामम्बरस्थानां दक्षिणादिक् प्रशस्यते।
प्राचीनावीत मुदकं तिलाः सव्याङ्ग मेव च ॥

दत्तं स्वधां पुरो धाय पितॄन् प्रीणाति सर्वदा ।
यत्र नीवारमुद्गेक्षु शुक्लपुष्प घृतानि च ॥
वल्लभानि प्रशस्तानि पितॄणा मिह सर्वदा ॥

कूर्मपुराणे—

स्थलोदुम्बरवस्त्राणि रजतं खड्ग मेव च ।
श्राद्धे महापवित्राणि फलानि समिधस्तथा ॥
स्थलो दुम्बरः स्थलोदुम्बर मयानि पात्राणि ॥

समाहरण विधिः मात्स्य पाद्मयोः—

आहरेदपसव्येन सर्वं दक्षिणतः शनैः ।

ब्रह्माण्ड-भविष्य पुराणयोः—

उत्तरेणा हरेत् वेद्या दक्षिणेन विसर्जयेत् ॥

श्राद्ध सम्भारान् । वेदिः श्राद्धभूमिः ।

सत्यव्रतः—

पितृप्रीतिनिमित्तानि द्रव्यं पात्रं सुतो विधिः ।
प्रधान पात्र मेतेषां पात्रसिद्ध्यै यतेदतः ॥

अथ कुतपादीनां लक्षणम् ।

प्रभासखण्डे—

ब्राह्मणाः कम्बलं गावो रूप्याग्न्यतिथय स्तथा ।
तिलादर्भाश्च कालश्च नवैते कुतपाः स्मृताः ॥

पठीनसिः—

मध्याह्नः खड्गपात्रश्च तथा नेपालकम्बलः ।
रूप्यं दर्भा स्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥
पापं कुत्सित मित्याहु स्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥

शातातपः—

दिवसस्याष्टमे भागे मन्दी भवति भास्करः ।
सकालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥

पैठीनसिः—

कुतोपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते ।
श्राद्धं पुनाति वै यस्मात् कुतपस्तेन संज्ञितः ॥

वृद्ध शातातपः—

दुहित्रं खड्ग शृङ्गं तु ललाटे यत्तु दृश्यते ।
तस्य शृङ्गस्य यत्पात्रं दौहित्र मिति कीर्त्तितम् ।
क्षीणेन्द्वपः पिवेद्यागौ स्तत्क्षीरात् यद् घृतं भवेत् ।
तद्दौहित्र मिति प्रोक्तं दैवे पित्र्ये च पूजितम् ॥

क्षीणेन्दावमावास्यायां यागौर्या अपः पिवेत् तस्या गोस्तत्परिणाम जन्यात् क्षीरात् यद्घृतं जायते तत् दौहित्रशब्देनोच्यत इत्यर्थः। अमावास्या व्यतिरेकेणापि गोविशेषप्रभवस्य घृतस्य दौहित्रत्वमुक्तं षट्त्रिंशन्मते—

अपत्यं दुहितुश्चैव खाड्गं पात्रं तथैव च ।
घृतं च कपिलाया गो दौहित्र मिति कीर्तितम् ॥

उशना—

कुशादर्भाः समाख्याताः कुतपाः वृसयस्तथा ।
दुहितुश्चैव ये पुत्रा दौहित्रास्ते प्रकीर्त्तिता ॥

आह यमः—

यत्नेन भोजयेच्छ्राद्धे दौहित्रं व्रतिनं शिशुम् ।
दत्वाऽसनन्तु कुतपं तिलैरन्ववकीर्य्य च ॥

शिशुत्वेन विद्याद्यतिशयानाधारभूतमपि व्रतस्थ मुपनीतं दुहितुः पुत्रं यत्नेन आदरविशेषेण भोजयेत्। कुतपं प्रागुक्तं कम्बलविशेषं तस्यासनं दद्यात् । न चास्यासनस्य तिलानां वा दौहित्रेण सम्बन्ध इति मन्तव्यम् ।

ब्रह्मपुराणे—

दर्भै मंत्रैस्तिलै र्हेम्ना रजतेन विना जलम् ।
दत्तं हरन्ति रक्षांसि तस्माद्द्यान्न केवलम् ॥

दर्भादिभिर्जलेन च विना दत्तं रक्षांसि हरन्ति इत्यर्थः ।

वाराह विष्णु पुराणयोः—

पादशौचादिना गेह मागता नर्च्चयेद् द्विजान् ।

मार्कण्डेय-ब्रह्माण्डपुराणयोः—

सम्पूज्य स्वागतेनैतानभ्युपेतान् गृहे द्विजान् ।
पवित्रपाणिराचान्ता नासनेषूपवेशयेत् ॥

मनु देवल शातातप स्मृतिषु । कूर्मपुराणेपि—

वसवः पितरोज्ञेया रुद्राश्चैव पितामहाः ।
प्रपितामहास्तथादित्याः श्रुति रेषा सनातनी ॥

मनुस्मृतौ—

वसून् वदन्ति वै पितृन् रुद्रांश्चैव पितामहान् ।
प्रपितामहां स्त्वथादित्यान् श्रुतिरेषा सनातनी ॥

याज्ञवल्क्येनोक्तम्—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितृन् श्राद्धेन तर्पिताः ॥
शुभाशुभगतिं प्राप्ता नानायोनिषु ये नराः ।
तैस्तैस्तु पुरुषै रिष्टाः पितरस्तर्पयन्तितान् ॥

वायुपुराणे—

न भोजयेदेकगोत्रान् समान प्रवरां स्तथा ।
एतेषु हि हविर्दत्तं भुञ्जते न पितामहाः ॥

ब्रह्माण्डपुराणे—

न भोज्या योनिसम्बन्धा गोत्रसम्बन्धिनस्तथा ।
मंत्रांतेवासिसम्बन्धाः श्राद्धे विप्राः कदाचन ॥

ब्रह्मवैवर्त्ते—

शिष्याश्च ऋत्विजो याज्याः सुहृदः शत्रवस्तथा ।
श्राद्धेषु श्वसुरः श्याला न भोज्या मातुलादयः ॥

मनुः—

न ब्राह्मणं परीक्षेत दैवे कर्म्मणि धर्म्मवित् ।
पित्र्ये कर्म्मणि तु प्राज्ञः परीक्षेत प्रयत्नतः ॥

शंखः—

ब्राह्मणान्न परीक्षेत दैवे कर्म्मण्य तंद्रितः ।
पित्र्ये कर्म्मणि संप्राप्ते युक्त माहुः परीक्षणम् ॥

पद्मपुराणे—

तीर्थेषु ब्राह्मणान्नैव परीक्षेत कथंचन ।
अन्नार्थिन मनु प्राप्तं भोजयेन्मनु शासनात् ॥

परीक्षा प्रकारस्तु वृद्ध मनुस्मृति मत्स्यपुराणयोर्दर्शितः—

शीलं सम्वसनात् ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा संकथनात् ज्ञेया त्रिभिः पात्रं परीक्षते ॥

इति श्राद्धसम्पदः ।

अथ ग्राह्य धान्यानि ।

कूर्मपुराणे—

व्रीहिभिश्च यवैर्माषै रद्भिर्मूलफलेन वा ।
श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियंगुभिः ॥
गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥

चण दाने कुन् । शस्यभेदे छोला इति प्रसिद्धः ।
चणका चणा छोला शस्यभेदे इति शब्दस्तोममहानिधिकोशः ।

ब्रह्मपुराणे—

यवैर्व्रीहि तिलैर्माषै गोधूमैश्चणकैस्तथा ।
सन्तर्पयेत् पितॄन्मुद्गैः श्यामाकैः सर्षपद्रवैः ॥
नीवारैश्च तथा माषैः प्रियंगुभिरथार्चयेत् ॥

विष्णुधर्म्मोत्तरे—

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकै रपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥

वर्ज्यं धान्यानि ।

षट्त्रिंशन्मते—

मुद्गाढकी माषवर्जं न दद्याद् विदलानि च ॥

शंखधरे—

कृतलवणमसूरचणकादि श्राद्धे न दद्यात् ।

मरीचिः—

कुलत्थाश्चणकाः श्राद्धे नदेयाश्चैव कोद्रवाः ।
कटुकानि च सर्वाणि विरसानि तथैव च ॥

कटुकानि पिप्पल्यादीनि ।

वृद्ध याज्ञवल्क्यः—

मकुष्टा राजमाषाश्च मसूराश्च चणास्तथा ।
कोद्रवा मूलका राजसर्षपाः श्राद्धघातकाः ॥

मत्स्य पुराणे—

तुष हीनानि धान्यानि यान्ति सर्वाणि मेध्यताम् ।
वर्जयित्वा मसूरान्नं मकुष्ठान् राजमाषकान् ॥

मार्कण्डेयः —

गोधूमैरिक्षुभिर्मुद्गैश्चीनकैश्चणकै रपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥

मनुस्मृतौ-मार्कण्डेयपुराणे-ब्रह्मवैवर्त्ते—

चणकानां ग्राह्याग्राह्यत्वं नोक्तम् ॥

अस्मिंश्च ग्राह्यवर्ज्यं धान्यप्रकरणे यश्चणकाढकी निष्पावादीनां विधिर्दृश्यते स शुक्लयजुषां विषयः। यश्च निषेधः स कृष्ण यजुषाम्।

ब्रह्मपुराणे—

गव्यं पयोदधि घृतं तैलं च तिलसम्भवम्।
सैंधवं लवणं चैव तथा मानससम्भवम् ॥

सुमन्तुः—

पयो दधि घृतं चैव गवां श्राद्धेषु पावनम्।
महिषीणां घृतं प्राहुः श्रेष्ठं नतु पयः क्वचित् ॥

कूर्मपुराणे—

क्षीरं क्षीरविकारं च पायसं शर्करा मधु।
देयं श्राद्धेषु यत्नेन सर्वदा पितृतृप्तये ॥

ब्रह्मपुराणे—

अन्नं च सदधिक्षीरं गोघृतं शर्करान्वितम्।
सम्वत्सरन्तु गव्येन पयसा पायसे न च ॥

आदित्यपुराणे—

न च गोऽन्यतिरिक्तानां पयः श्राद्धेषु शस्यते।
सविकारं गवामेव पितॄणां तृप्तये पयः ॥

अत्रिः—

अगोधूमं च यच्छ्राद्धं माषमुद्गविवर्जितम्।
तैलपक्वेनरहितं कृतमप्यकृतं भवेत् ॥

अत्र तैलपक्व पदार्थे वटका एव ग्राह्या नान्य पदार्थाः।

अथ वर्ज्य शाकादीनि।

कूर्म-वायुपुराणयोः—

लशुनं गृंजनं चैव पलांडुं पिंडमूलकम्।
पिप्पली मरिचं चैव पंटोलं वृहती फलम् ॥
श्राद्ध कर्म्मणि वर्ज्यानि या चनार्यो रजस्वलाः ॥

उशना—

१ कुंभी २ कंबुज ३ वृंत्ताकं ४ कोविदारांश्च वर्जयेत् ॥

१ श्रीपर्णी २ वृत्ताकार मलावु फलम्। ३ श्वेत वृंत्ताकं ४ कांचन पुष्पम्।

देवलः—

कंडूरं श्वेत वृंत्ताकं कूष्मांडं च विवर्जयेत्।

कूर्मपुराणे—

आढकीं कोविदारांश्च पालक्यां मरिचं तथा।
वर्जयेत्सर्वयत्नेन श्राद्धकाले द्विजोत्तमः॥

मरिचान्यार्द्राणि स्वतंत्रशाकतया प्राप्तानि प्रतिषिध्यन्ते नतु शाक संस्कारत्वेन शुष्काणि।

विष्णुस्मृतिः—

श्राद्धे वर्जयेत् राजमाषमसूरपर्य्युषितकृतलवणानि च। पर्युषितं पूर्वदिनकृतं मोदकादि व्यंजनं वर्ज्यम्।

वायुपुराणे—

पिप्पली मरिचं हिंगु पटोलं च विवर्जयेत्।

चतुर्विंशतिमते—

कोद्रवा राजमाषाश्च कुलत्था वरकास्तथा।
यावनालानपि तथा वर्जयन्ति विपश्चितः॥

कात्यायनः—

मसूर क्षारवार्त्ताक कुलत्थ शणशिग्रवः।
एतानि नैव देयानि कुसुम्भ मधुकातसी॥

मत्स्यपुराणे—

मूलपत्र करीराग्र फल काण्डाधिरूढकम्।
त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम्॥

पत्रं—पालक्य नाडीवादि। करीरं—वंशाङ्कुरादि। अग्रं—प्लक्षवेत्रादीनाम्। फलं—कूष्मांडादि। कांडं—सार्षपवास्तूकादि। कवकं—शिलींध्रादि।

वायुपुराणे—

लशुनं गृञ्जनं चैव पलांडुं पिंडमूलकम्।
कलम्बायानि चान्यानि हीनानि रसगन्धतः॥
पिप्पली मरिचं चैव पटोलं वृहती फलम्।
वांशं करीरं सुरसमार्जकं भूतृणानि च॥
अवेदोक्ताश्च निर्यासा लवणान्यूषराणि च।
श्राद्धकर्म्मणि वर्ज्यानि याश्चनार्यो रजस्वलाः॥

महाभारते—

कुस्तुम्बरं कलिंगोत्थं वर्जयेदम्लवेतसम्।
हिंगुं द्रव्येषु शाकेषु मालानं लशुनं तथा॥

उपमन्युः—

नाश्नीयात् श्वेतवृंत्ताकं मातुलानीं तथाण्डकम्।

मातुलानी भंगा—भांग। अण्डकं छत्राकम् शिग्रुः—सहजन। सर्षपकांडर। पालक। तण्डुलीयक। चौलाई। नालिका—नाडी। करीर—गूढपत्र—कैर-टैंटी। कवला—छत्राक। राई। कलौंजी। एतानि श्राद्धे वर्ज्यानि।

———

## अथ ग्राह्यानि फलमूलानि।

शङ्खः—

आम्रान् पालेवतानिक्षून्मृद्वीका भव्यदाडिमान्।
विदार्यांश्च भरुण्डांश्च श्राद्धकाले प्रदापयेत्॥

पालेवतं—जम्बीराकारं फलं काश्मीरेषु प्रसिद्धम् मृद्वीका—द्राक्षा। भव्यं—कर्मरंगफलम्—नींबू। बिदारीकंद। भरुण्डाः काश्मीरदेशे प्रसिद्धाः।

ब्रह्मपुराणे—

कालशाकं तन्दुलीयं वास्तुकं दीर्घमूलकम् ।
शाकमारण्यकं चैव दद्यात्पुष्पाण्यमूनि च ॥

कालशाकं–श्राद्धीय शाकभेदे । वास्तुकं–बथुवा ।

ब्रह्मपुराणे—

आम्रमाम्रातकं बिल्वं दाडिमं बीजपूरकम् ।
क्षीणकं लकुचं जम्बु भव्यं भूतं तथारुकम् ॥
प्राचीनामलकं क्षीरं नारिकेलं परूषकम् ।
नारङ्गं च सखर्जूरं द्राक्षा नीलकपित्थकम् ॥
पटोलं च प्रियालं च कर्कंधुबदराणि च ।
वैकंकतं वत्सकं च एर्वारुर्व्वारुकानि च ॥
एतानि फलजातीनि श्राद्धे देयानि यत्नतः ।
दाडिमं मागधी चैव नागरार्द्रकतिन्तिडीः ॥
आम्रातकं जीरकं च कुम्बरं च नियोजयेत् ॥

आम्रातकं–अमडा । क्षीणकं—शाकभेदः । लकुचं–ओंट इति ख्यातस्य—क्षुद्रपनसस्य वा । भूतं—गन्धादि विशेष गुणवत्सुद्रव्येषु । परूषकं—वृक्षभेदे । वैकंकत—वृक्षभेदे—वैंचि इति ख्यातस्य । वत्सकं—कुटजे इन्द्रयवे च । उर्वारु—ककडी । पटोलं–क्षुद्र पटोल निषेधः परवल इति ख्यातस्य । अयम्—दीर्घ पटोलः चचेडा इति ख्यातस्य विधिः ।

कूर्मपुराणे—

बिल्वामलकमृद्वीकं पनसाम्रातदाडिमम् ।
भव्यं पारावताक्षोट खर्जूराम्र फलानि च ॥
कसेरुः कोविदारं च तालकन्दस्तथा बिसम् ।
तमाल शतकन्दश्च मध्वालुः शीतकन्दली ॥
कालेयं कालशाकं च सुनिषंणः सुवर्चला ।
मांसं शाकं दधिक्षीरं चंचुर्वेचांकुरस्तथा ॥

कट्फलं कौङ्कणीद्राक्षा लकुचं मोचमेव च ।
उष्ट्रग्रीवं कचोरं च तिन्दुकं मधुसाह्वयम् ॥
वैकंकतं नारिकेलं शृंगाटक वरूषकम् ॥

मार्कण्डेयः—

विदारिभिर्मुरुण्डैश्च विसैः शृङ्गाटकैस्तथा ।
केचुकैश्च तथा कन्दैः कर्कंधू वदरैरपि ॥
पालेवतैरारुकैश्च क्षौडैश्च पनसैस्तथा ।
काकोलैः क्षीरकाकोलै स्तथा पिण्डालकैः शुभैः ॥
लाजाभिश्च शिलाभिश्च त्रपुसोर्वारु चिर्भटैः ।
सर्षपै राजशाकाभ्या मिङ्गुदैराज तन्तुभिः ॥
प्रियालामलकैर्मुख्यैः फल्गुभिश्चाति लम्बकैः ।
वेत्राङ्कुरैस्तालकन्दैश्चुक्रका क्षीरिकावचैः ॥
मोचैः समोचैर्लकुचैस्तथावै बीजपुत्रकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैश्च संस्कृतैः ॥
रागखाण्डवचौष्यैश्च त्रिजातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥

विदारीकन्दः । मुरुण्डः जलप्रभवः कन्दविशेषः । विसं–पद्मनालम् । शृङ्गाटकः—सिंघारा । कचुकः—कचूर । कन्दः—जमीकन्दः । कर्कन्धूः—वदर विशेषः । वदरः । पालेवतं–जम्बीराकारफलं काश्मीरे प्रसिद्धम् । आरुकः–आरकन्दः । आक्षोड–अखरोट । पनसः–कटहर । काकोली । क्षीरकाकोली । पिण्डालुकः—पिण्डखजूर । लाजा—भ्रष्टधानाः । शिला–शैलेयः—शिलाजीत । त्रपुसं–त्रपुसीफलम् । उर्वारु–ककडी । चिर्भटः–कटुककडी । सर्षपः–गौरसर्षपशाकम् । राजशाकं—शाकविशेषः । इङ्गुदीफलम् । राजतन्तू—शाकभेदः । प्रियाला—द्राक्षा । फल्गुः—काकोदुम्बरिका फलम् । अतिलम्बकः–तालमूलीकन्दः । चुक्रका–इमली । क्षीरिका–फल विशेषः । मोचा—कदली । लकुचैः—लिकुचफलः ओंट इतिख्यातस्य-क्षुद्रपनसस्य वा ।

शङ्खः—

पिप्पलि मरिचं चैव पटोलं वृहती फलम् ।
सुगंध गन्धिसिंचन्ती कलायाः सर्व एव च ॥
एवमादीनि धान्यानि स्वादूनि मधुराणि च ।
नागरं चात्र वैदेयं दीर्घमूलक मेव च ॥
आरामस्य तु सीमन्ताः प्रशस्ता श्राद्धकर्म्मणि ॥

आपस्तम्बः—

ब्राह्मण व्यतिरिक्तेन कापिलं पयो न पेयमिति ।

आदित्यपुराणे—

मधुकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्म्मणि शस्तानि सैंधवं त्रपुसं तथा ॥

वायुपुराणे—

पिप्पली मरिचं हिंगु पटोलं वृहतीफलम् ॥

अत्र हिङ्गुनो विहित प्रतिषिद्धत्वात् विकल्पनेति मन्तव्यम् । अन्येतु तत् श्वेतहिङ्गुविषयं वर्णयन्ति । लोहितान् वृक्षनिर्यासान् वर्जयेत् श्राद्धकर्म्मणीति स्मृत्यन्तरे दर्शनात् । अन्ये च शाक संस्कार द्रव्यान्तरालाभेऽनुपकल्पत्वेन हिंगूपादेय मित्याहुः । अपरे च शाकरूपादि हिंगु विषयं वदन्ति । हिंगु लवण मरिचानाममिश्रत्वेन प्रत्यक्षाणां निषेधादिति । एतत्तु हिंगुनः पृथक् भूतस्यानुपयोज्यत्वात् लवणस्यैव च प्रत्यक्षस्य निषेधादयुक्तम् ।

## अथ पचन भाण्डानि ।

नागरखण्डे—

शुचीनि पितृपाकार्थं पिठराणि प्रकल्पयेत् ।
सौवर्णान्यथरौप्याणि ताम्र कांस्योद्भवानि च ॥
मार्त्तिकान्यपि भव्यानि नूतनानि दृढानि च ।
न कदाचित् पचेदन्न मयस्थालीषु पैतृकम् ॥

अयसो दर्शनादेव पितरो विद्रवन्ति हि ।
अयज्ञियममंगल्यं लोह माहुर्मनीषिणः ॥
दैवेषु चैव पित्र्येषु गर्हितं सर्वकर्म्म सु ।
कालायसं विशेषेण निन्दितं पितृकर्म्मणि ॥
फलानां चैव शाकानां छेदनार्थानि यानि तु ।
महानसेपि शस्त्राणां तेषा मेवहि सन्निधिः ॥
इष्यतेने तरस्यात्र शस्त्रमात्रस्य दर्शनम् ।
श्राद्धदेशेतु विदुषां पितॄणां प्रीतिमिच्छता ॥
महानसोपयुक्तानामपि कार्यं निदर्शनम् ।
अयः शंकुमयं पीठं प्रदेयं नोपवेशनम् ॥

एवमेव चमत्कार खण्डे—आदित्य पुराणेपि । अथ भोजनपात्राणि-वाराहपुराणे—

सौवर्णानीह पात्राणि सम्पाद्यानि प्रयत्नतः ।
तदभावेतु रूप्याणि कांस्यानि तदसम्भवे ॥
पलाशपर्णजानिस्युः श्राद्धेषु द्विजभोजने ।
अन्यान्यपिहि पात्राणि दारुजान्यपि जानता ॥
यथोपपन्नं कार्याणि मृण्मयानि तु न क्वचित् ।
नायसान्यपि कुर्वीत पैत्तलानि न चैव हि ॥
न च सीसमयानीह शस्यन्ते त्रपुजान्यपि ।
पलाशेभ्यो विनानस्युरन्यपत्राणि भोजने ॥

वृद्धशातातपः—कूर्मपुराणेपि—

पात्रे तु मृण्मये यस्तु श्राद्धे भोजयते पितॄन् ।
तत्र दाता पुरोधाश्च भोक्ता च नरकं व्रजेत् ॥

अङ्गिराः—

न जाती कुसुमानि दद्यात् न कदलीपत्रमिति ।

अथ परिवेषण पात्राणि—हारीतः—

काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा ।
दत्तमक्षयतां याति खड्गपात्रेण चैव हि ॥

अत्र विशेष माह पैठीनसिः—

दैवे सौवर्णानि श्रेष्ठानि पित्र्ये तु राजतानि परिवेषण पात्राणीति।

मनुः—

राजतैर्भाजनैरेषा मपि वारजतान्वितैः।
वार्यपि श्रद्धयादत्त मक्षय्यायोप कल्पते ॥

कूर्मपुराणे—

न दद्यात् रिक्तहस्तेन प्रत्यक्षं लवणं तथा।
न चायसेन पात्रेण न चैवा श्रद्धयान्वितः ॥

विष्णुः—

प्रत्यक्षं लवणं न दद्यात् हस्तेन न घृत व्यञ्जनादि दद्यात्। पात्राद्यभावे तृणेन पर्णेन वा हस्तमन्तर्द्धाय प्रदेय मित्याह वृद्ध शातातपः—

हस्तदत्तास्तथे स्नेहा लवणं व्यञ्जनानि च।
दातारं नोपतिष्ठन्ति भोक्ताभुञ्जीतकिल्विषम् ॥
तस्मादन्तरितं देयं पर्णेनैव तृणेन वा।
प्रदद्यान्नतु हस्तेन नायसेन कदाचन ॥

वृद्धशातातप–लघुहारीत–वसिष्ठाः—

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते।
भोक्ता विष्ठाशनं भुङ्क्ते दाता च नरकं व्रजेत् ॥

मार्कण्डेयपुराणे—

नापवित्रेण हस्तेन नैकेन न बिना कुशम्।
नायसे नायसेनैव श्राद्धे तु परिवेषयेत् ॥

अपवित्रेण—दुर्लेप संसर्गादिना अपूतेनेति।

## अथ श्राद्ध भोक्तुर्नियमाः।

पीत्वा पोशानमश्नीयात् पात्रेदत्तमगर्हितम्।
सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः ॥

मनुः—

अत्युष्ण सर्वमन्नंस्यात् भुञ्जीरंश्चैव वाग्यताः ।
न च द्विजातयो ब्रूयु र्दात्रापृष्टा हविर्गुणान् ॥

अत्युष्णं–ईषदुष्णं–उष्णत्वेपि यथामुखे सुख स्पर्शं भवति । यस्योष्णस्य भोजनमुचितं तत्रैवेदमुष्णता विधानं न तु दध्योदनादेस्त्वौष्ण्यं व्याधिकरम प्रीतिकरं च । तादृशस्य च प्रदाने हर्षयेत् ब्राह्मणा निति विरुध्यते । उष्ण भोजन विधानाच्च न सर्वमन्नं सकृत्परिवेष्टव्यं बहु भोजिनः शीतलीभवेदन्नं तस्मात् पूर्व परिविष्टे भुक्ते पुनरन्यद्दद्यात् ।

अतएवाह जावालिः—

इष्ट मुष्णं हविष्यं च दद्यादन्नं शनैः शनैः ।

अत्रिः—

हुंकारेणापि यो ब्रूयात् हस्ताद्वापि गुणान् वदेत् ।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत् ॥
प्रौढपादो बहिः कक्षो बहिर्जानु करोथ वा ।
अंगुष्ठेन विना श्नाति मुखशब्देन वापुनः ॥
पीत्वावशिष्ट तोयानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्द्धात्पुनः खादेन्मोदकानि फलानि च ॥
मुखेन वा धमेदन्नं निष्ठीवेत् भाजनेपि वा ।
इत्थमश्नन्द्विजः श्राद्धं दत्वागच्छत्यधोगतिम् ॥

आसनारूढपादस्तु प्रौढपादः स उच्यते । बहिः कक्षः—उत्तरीय वासो बहिर्भूत कक्षः । भूतलात्पात्रोद्धरणे दोषोऽन्नाधार महाभाजन विषयः । पानाद्याधार लघुपात्रस्य तु पुनरुद्धृत्य वापिबेदिति ।

देवलः–वायुपुराणेपि—

अन्न पानकशीतोदं दददुभ्यो ह्यवलोकितः ।
वक्तव्ये कारणे संज्ञां कुर्वन् भुञ्जीत पाणिना ॥
यावदन्नं भवत्युष्णं यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥

निगमः—

नान्नपानादिकं श्राद्धे वारयेन्मुखतः क्वचित् ।
अनिष्टत्वात् बहुत्वाद्वा वारणं हस्त संज्ञया ।।

प्रभासखण्डे—

रसायत्र प्रशस्यन्ते भोक्तारो बन्धु गोत्रिणः ।
राजवार्त्तादि संक्रंदो रक्षः श्राद्धस्य लक्षणम् ।।

वृद्धशातातपः—

अपेक्षितं याचितव्यं श्राद्धार्थ मुपकल्पितम् ।
न याचते द्विजो मूढः स भवेत् पितृघातकः ।।

वायुपुराणे—

याचते यदि दातारं ब्राह्मणो ज्ञानवर्जितः ।
पितरस्तस्यरुष्यन्ति दातुर्भोक्तुर्न संशयः ।।
एतत् श्राद्धार्थ मननुकल्पितवस्तु विषयम् ।

श्राद्धार्थमुपकल्पित मप्यन्नादिकमत्यन्ताधिकं दाता न दद्यात् भोक्ता च न प्रति गृह्णीयात् । तदाह तुः शङ्ख लिखितौ ।

नाग्रासनस्थः पूर्वमश्नीयान्नाधिकं दद्यान्न प्रतिगृह्णीयात् । तृप्तौ जातायां दध्यादीनि विहाय यत् किञ्चिदवशेषणीय मित्याहोशनाः—

भोजनन्तु न निःशेषं कुर्य्यात्प्राज्ञः कथंचन ।
अन्यत्र दध्नः क्षीराद्वाक्षौद्रात्सक्तुभ्य एव च ।।

इति श्राद्धभोक्तृ नियमाः ।

## अथ भोजयितृ नियमाः

मनुः—

हर्षयेत् ब्राह्मणां स्तुष्टो भोजयेच्चाशनं शनैः ।
अन्नाद्येना सकृच्चैतान् गुणैश्च परिचोदयेत् ।।
यद्यत् रोचेत विप्रेभ्यस्तत्तद्दद्याद मत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्यात् पितृणामेतदीप्सितम् ।।

याज्ञवल्क्यः—

अन्नमिष्टं हविष्यं च दद्याद क्रोधनोऽत्वरः ।

बृद्ध शातातपः-निगमोपि—

अपेक्षितं योन दद्याच्छ्राद्धार्थमुपकल्पितम् ।
कृपणो मन्दबुद्धिश्च न च श्राद्धफलं लभेत् ॥
अधः कृच्छ्रासुघोरासु तिर्यक्‌योनिषु जायते ॥

बृहस्पतिः—

भक्ष्य भोज्य गुणानुक्त्वा भोजयेद्ब्राह्मणाञ्छनैः ।
आख्यानैः सेतिहासैश्च पूर्ववृत्तैश्च हर्षयेत् ॥

शङ्खः—

श्राद्धे नियुक्तान्भुञ्जानान्नपृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्रसंशयः ॥

ब्रह्माण्डपुराणे—

न चाश्रुपातयेज्ञातु न शुक्लां गिर मीरयेत् ।
न चोद्वीक्षेत भुञ्जानान्न च कुर्वीत मत्सरम् ॥
शुक्लां शोकवतीं परुषां च ।

देवलः—

प्राप्ते हि कारणे श्राद्धे नैव क्रोधं समुच्चरेत् ।
आश्रितः स्विन्नगात्रो वा न तिष्ठेत् पितृसन्निधौ ॥
न चात्रश्येन काकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तेहि समायान्तीति वैदिकम् ॥

## अथ विभक्तयः ।

गोत्र सम्बन्ध नामानि यथावत्प्रतिपादयेत् ।

इति वचनात् गोत्र प्रतिहेतोः शब्दस्योच्चारणं कर्त्तव्यं तत्राविभक्ति कर्त्तुमशक्यमिति विकल्पमानासु यस्यां विभक्तौ प्राप्तायां शास्त्रेण नग्मः क्रियते तत्र विभक्ति विशेषैरेव श्राद्धे देयम् ।

इत्याह नारायणः—

विभक्तिभिस्तु संयुक्तं दीयते पितृ दैवतम् ।
दत्तमक्षयतां याति विपरीत मनर्थकम् ॥

नागरखण्डे—

विभक्तिरहितं श्राद्धं क्रियते यद्विपर्ययात् ।
अकृतं तद्विजानीयात् पितॄणां नोपतिष्ठते ॥
तस्मात्सर्वं प्रयत्नेन ब्राह्मणेन विजानता ।
विभक्तिभिर्यथोक्ताभिः श्राद्धंकुर्यात्त्रिभिः सदा ॥

त्रिभिरिति छान्दसं विभक्तीनां विशेषणम् । अतस्तिसृभिर्विभक्तिभिः सर्वदा श्राद्धं कर्त्तव्यम् । एतच्च तिसृणां विभक्तीनां सर्वदा श्राद्ध मात्र सम्बन्धाभिप्रायेण न तु तिसृणामेव श्राद्ध मात्र सम्बन्ध इति मन्तव्यं विभक्ति चतुष्टयस्य वक्ष्यमाणत्वात् । एकोद्दिष्टे आवाहनाभावेन द्वितायाया मंत्राभावात् । काः पुनस्ता विभक्तयः इत्यपेक्षायाया मुक्तम् । प्रथमा च चतुर्थी च षष्ठीस्याच्छ्राद्ध सिद्धये । प्रथमाचेति । च शब्देन तद्विशेषः सम्बुद्धिरुपादीयते । उत्तरेण च कारेण द्वितीया तेन प्रथमा सम्बुद्धि द्वितीया चतुर्थी षष्ठीनां यथौचित्यं प्रयोगेण श्राद्धं साधयेत् । अतएवाह व्यासः—

चतुर्थी चासने नित्यं सकल्पे च विधीयते ।
प्रथमा तर्पणे प्रोक्ता सम्बुद्धिमपरे जगुः ॥

सम्बुद्धिं अपरे अपर स्मिन् अर्घ्यं दानादौ कर्त्तव्यम् ।

अतएवाह धर्म्मः । भृगुरपि—

पृच्छाक्षय्यासने षष्ठी चतुर्थीचासने मता ।
अर्घ्या वनेजनं पिण्डं तथा प्रत्यवनेजनम् ॥
सम्बुद्ध्यैतानि कुर्वीत सर्वशास्त्र विशारदः ॥

संग्रहकारः—

अक्षय्यासनयो षष्ठी द्वितीया वाहने रिता ।
अन्नदाने चतुर्थी स्यात् शेषाः सम्बुद्धयः स्मृताः ॥

भविष्योत्तरे—

चतुर्थी सर्वकार्य्येषु प्रथमा तर्पणे स्मृता ।
षष्ठी विभक्तिरक्षय्ये पितृकार्ये यथाविधि ॥

नागरखण्डे—

आवाहनन्तु कर्त्तव्यं विभक्त्याथ द्वितीय या ।
ये नागच्छन्ति ते सर्वे समाहूता पृथक् पृथक् ॥
अन्यथा तु विभक्त्या च पितॄन्ना वाहयेत् क्वचित् ।
नागच्छन्ति महाभागा यद्यपि स्युर्बुभुक्षिताः ॥

वह्वृच परिशिष्टे—

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्म्मणि ।
गोत्रस्तु तर्पणे कुर्य्या देवं दाता न मुह्यति ॥

वृहत्प्रचेता—

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्म्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः एवं कर्त्ता न मुह्यति ॥
सर्वत्रैव पितः प्रोक्तः पिता तर्पण कर्म्मणि ।
पितुरक्षय्य काले तु पितॄणां दत्तमक्षयम् ॥

नागरखण्डे--

सर्वत्रैव पितः प्रोक्तः पिता तर्पण कर्म्मणि ।
पित्र्ये संकल्पकालेतु पितुरक्षय्यदापने ॥
गोत्रं स्वरान्तं सर्वत्र गोत्रस्तर्पण कर्म्मणि ।
शर्मणे सस्यदाने तु शर्मणो ऽक्षय्यके विधौ ॥

संकल्पकाले—अन्नत्यागकाले । सस्यदाने—अन्नदाने । स्त्रीलिङ्गेपि-

गोभिलः—

गोत्रायाश्चासने कुर्यात् गोत्रे चैवार्घ्य पिंडयोः ।
गोत्रायाश्चाक्षय्यकाले गोत्रायै त्याग एव च ॥
गोत्रा मावाहने कुर्य्यात् स्त्रीलिङ्गे तु न संशयः ॥

बृहस्पतिः—

ऋजून्सव्येन वैदत्वा देवे दर्भान् प्रदक्षिणम् ।
द्विगुणानपसव्येन दद्यात्पित्रेऽपसव्यवत् ॥

कार्ष्णाजिनिः—

अपसव्येन कर्त्तव्यं पित्र्यं कृत्यमशेषतः ।
अन्नदानादृते सर्वं सेवं मातामहे ष्वपि ॥
अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति ।
विष्ठामश्नन्ति पितरस्ते च सर्वे द्विजोत्तमाः ॥

अन्नदानमत्र परिवेषणं विवक्षितं नतु पित्र्याद्युद्देशेनान्नत्यागः ।

मरीचिः—

प्रदक्षिणं शिवा आपो जयाशीः स्वस्तिवाचनम् ।
विप्रेषु दक्षिणादानं षट्सव्यानि प्रचक्षते ॥

अथ गन्धाः । गरुडपुराणे—

यस्तु गन्धान्पितृणां वैदद्यादा मोदितो नृप ।
गन्धर्वाप्सरसां लोकान्संप्राप्य दिवि मोदते ॥
गन्धा यथोपचारेषु पितृणा मति वल्लभाः ।
न तथा विद्यते ह्यन्य दतो देयाः प्रयत्नतः ॥
विश्वेषामपि देवाना मत्यंतं प्रीति हेतवः ।
गन्धास्तस्मात्प्रयत्नेन गन्धैस्तानपि पूजयेत् ॥

वाराहपुराणे-भगवतीपुराणेपि—

योनुलिम्पति गात्राणि श्राद्धं कुर्वन् द्विजन्मनाम् ।
देवाश्च पितरश्चैव तस्य तुष्यन्ति सर्वदा ॥

विष्णुः—

चन्दन कुङ्कुम कर्पूरा गुरु पद्मकान्यनु लेपनायेति ।

मार्कण्डेयः—

चन्दनागुरु कर्पूर कुङ्कुमानि प्रदापयेत् ।
अश्वमेध मवाप्नोति पितॄणा मनु लेपनात् ।।

मरीचिः-

कर्पूर कुङ्कुमो पेतं सुगन्धि सितचन्दनम् ।
दैविकेप्यथवा पित्र्ये गन्धदानं प्रशस्यते ।।

ब्रह्मपुराणे—

श्वेतचन्दन कर्पूर कुङ्कुमानि शुभानि च ।
विलेपनार्थं दद्यात्तु यच्चान्यत्पितृवल्लभम् ।।
कुष्ठं मांसी वालकं च त्वक् कुष्ठी जातिपत्रकम् ।
नालिकोशीर मुस्तं च ग्रन्थिपर्णं च दुम्बरम् ।।
मुराचेत्येव मादीनि गन्धयोग्यानि पैत्तृके ।।

वर्ज्यागन्धाः नृसिंह नारदीय ब्रह्मपुराणेषु—

श्राद्धेषु विनियोक्तव्या न गन्धा जीर्ण दारुजाः ।
शुक्ली भावं समासाद्य न च पर्युषिता क्वचित् ।।
न विगन्धाश्च दातव्या भुक्तशेषा विशेषतः ।
जीर्णं विकृत गन्धं च गन्धं श्राद्धं न योजयेत् ।।
पूतीकं मृगनाभिं च रोचनां रक्तचन्दनम् ।
कालीयकं जोङ्गकं च तुरुष्कं चापि वर्जयेत् ।।

पूतीकं । सुगन्धि तृण विशेषः । कालीयक–जोङ्गके गन्ध द्रव्य विशेषौ । तुरुष्कः सिल्हकः ।

अथ पुष्पाणि । वायु–ब्रह्माण्डपुराणयोः—

शुक्लाः सुमनसः श्रेष्ठा स्तथा पद्मोत्पलानि च ।
गन्धवर्णोपपन्नानि यानि चान्यानि कृत्स्नशः ।।

अत्रविष्णुः—

जलजानि रक्तान्यपि दद्यात् ।

प्रभासखण्डे–मार्कण्डेयपुराणयोः—

जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका ।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥

ब्रह्मपुराणे—

जातीचम्पक लोध्रांश्च मल्लिका बाण वर्चरी ।
चूताशोका टरूषं च तुलसीं तिलकं तथा ॥
पारन्तीं शतपत्रं च गन्धनेपालिकामपि ।
कुजकं तगरं चैव मृगमारं च केतकीम् ॥
यूथिका मतिमुक्तां च श्राद्धयोग्यानि भोद्विजाः ।
कमलं कुमुदं पद्मं पुण्डरीकं च यत्नतः ॥
इन्दीवरं कोकनदं कल्हारं च नियोजयेत् ॥

अत्र जात्यश्च सर्वादातव्याः इति पूर्वोक्तवचनस्य निर्विषत्वमापद्यते ।

अथ वर्ज्यानि पुष्पाणि । नागरखण्डे—

जातीपुष्प समायुक्तं तच्छ्राद्धं व्यर्थतां व्रजेत् ।

अङ्गिरा—

न जातीं कुसमानि दद्यान्न कदलीपत्रमिति अत्र कदलीपत्रं भोजनपात्रतया प्राप्तं निषिध्यते ।

शङ्खः—

उग्र गन्धान्य गन्धानि चैत्य वृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥
वनोद्भवानि देयानि रक्तान्यपि विशेषतः ॥

पद्म मत्स्यपुराणयोः—

पद्म विल्वार्क धुस्तूर पारिभद्रा टरूपकाः ।
न देयाः पितृकार्येषु पयश्चा जाविकं तथा ॥

सौरपुराणे—

अब्जादन्यत् रक्तपुष्पं शिशुमारं तथैव च ।
नीरसान्यपि सर्वाणि भक्ष्यभोज्यानि यानि च ॥
एतानि नैवदेयानि सर्वस्मिन् श्राद्धकर्म्मणि ।
शुचीनिह्यन्नपानानि वाक् शस्तानि न संशयः ॥

अत्र पद्मपत्रं पुष्पं वा स्थलजं प्रतिषिध्यते जलजस्य विहितत्वात्। पारिभद्रः रक्तस्तवकयुक्तो मन्दारः। इत्यलं विस्तरात् पितृभ्यः श्रद्धया धूप दीप वस्त्राभरण शैय्या गृह भूमि यानादि यत्किंचित् दीयते तदनंत्याय कल्पते ।

## अथ पक्वान्न शुद्ध्युपायाः ।

यमः—

वाक्य शस्तानि भुञ्जीत वाग्दुष्टानि विवर्जयेत् ।

लौगाक्षिः—

पयो दधि विकारादि शुचिपात्रां तदस्थितम् ।
पावनोत्पवनाभ्यां च पर्यग्नि करणेन च ॥

पावनं-वस्त्रादि गालनं उत्पवनं दर्भ पवित्रेण ।

शङ्खः—

घृत दधि पयस्तक्राणामाकरभाण्डस्थिता नाम दोषः ।
आधार दोषे तु नयेत्पात्रात्पात्रान्तरं द्रवम् ।
घृतन्तु पायसं क्षीरं तथैवेक्षुरसो गुडः ॥
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥

यमः—

देव द्रोण्यां विवाहेषु यज्ञेषु प्रसवेषु च ।
काकैः श्वभिश्चयत् स्पृष्टं तदन्नं न विवर्जयेत् ॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कार मर्हति ।
घनानां प्रोक्षणात् शुद्धिर्द्रवाणा मपि तापनात् ॥

संस्पर्शनात् भवेच्छुद्धिरपामग्नेर्घ्र तस्य च ।
छागेन मुख संस्पृष्टं शुचित्वेन विनिर्दिशेत् ॥

बृहस्पतिः—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरे ग्रामदाहे च स्पृष्टास्पृष्टं न दुष्यति ॥

शातातपः—

गोकुले कन्दुशालायां तैलचक्रेक्षु यंत्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च ॥

वायुपुराणे नग्नादीनभिधायोक्तम्—

अन्नं पश्येयुरे तेतु यदि वै हव्यकव्ययोः ।
उत्सृष्टव्यं प्रधानार्थं संस्कारस्त्वापदि स्मृतः ॥

ब्रह्मपुराणे—

हविषां संस्कृतानां तु पूर्व मेवापवर्जनम् ।
मृत्संपृक्ताभिरद्भिश्च प्रोक्षणन्तु विशुद्धये ॥
सिद्धार्थकैः कृष्णतिलैः कार्यं चाप्य वकीरणम् ।
द्विजसूर्याग्नि वस्तानां दर्शनं च प्रयत्नतः ॥
शुद्धवत्योथ कूष्माण्डा पावमान्यस्तरत्समाः ।
पूतेन वारिणा वापिरन्नदोषा न पानुदेत् ॥

## अथाशुद्ध्यपवादाः ।

याज्ञवल्क्यः—

आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता ।
शुचि धर्म्म परोराजा सन्तुष्टोब्राह्मणः शुचिः ॥

सुमन्तुः । हारीतोपि—

मक्षिका *विप्रुषो नार्यो भूमिस्तोयं हुताशनः ।
मार्जारश्चैव दर्वी च मारुतश्च सदाशुचिः ॥

* विप्रुषः—श्लेष्मविन्दवः ।

शङ्खः—

शुद्धं नदी गतं तोयं सर्वे शुद्धास्तथा कराः ।
शुद्धं प्रसारितं पण्यं शुद्धमश्वाजयोर्मुखम् ॥

बौधायनः—

अदूष्याः सततं धारा वातोद्धूताश्च रेणवः ।
आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ॥

पैठीनसिः—

आकराः शुचयः सर्वे पण्यं यच्च प्रसारितम् ।
स्त्रियो बालाश्च वृद्धाश्च न दुष्यन्ति कदाचन ॥

शातातपः—

अपां नोच्छिष्ट दोषोस्ति मधुनो नच सर्पिषः ।
न फलानां न चेक्षूणां नाकराणां न योषिताम् ॥
बालकैर्यत्परिक्रान्तं स्त्रीभिराचरितं चयत् ।
मशकैर्मक्षिकाभिश्च निलीनं नोपहन्यते ॥

पैठीनसिः—

मधु सर्पि फल बाल स्त्रीणामनुच्छिष्टम् ।

देवलः—

अथ सर्वाणि धान्यानि द्रव्यान्याभरणनानि च ।
अवर्ज्यं भक्ष्यभोज्यानि शुचीन्येतानि केवलम् ॥
आकराहि स्वयं शुद्धा द्रव्याणा मिति निर्णयः ।
क्रीतं च व्यवहारिभ्यः पण्यं शुद्धमिति स्मृतम् ॥
अदुष्टं वाक् प्रशस्तं च स्वयं शुद्धं च केवलम् ।
अकश्मलैः समिद्धोग्निः दुर्मनुष्यैर दूषितः ॥
सर्वेषामप्य शौचानां समर्थः शोधनायसः ।
द्रव्याणामग्निदग्धानां मेध्यत्व मुपदिश्यते ॥

ज्वालाभि मृष्टपात्राणां शुचित्वं नियतं भवेत् ।
अग्निर्वृषलभुक्तस्य ग्रहणं नास्त्यनापदि ।।
श्वपाको वृषलोभोक्तृ ब्राह्मणोऽग्निरनाहितः ।
चाण्डालाग्नेर मेध्याग्नेः सूतिकाग्नेश्च कर्हिचित् ।।
पतिताग्नेश्चिताग्नेश्च न शिष्टै ग्रहणं स्मृतम् ।।

मनुः । विष्णुरपि—

ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्य धस्तान्य मेध्यानि देहाश्चैव मलाश्च्युताः ।।

बौधायनः—

नाभेरधश्च संस्पर्शं कर्म्मयुक्तो विवर्जयेत् ।

उशना । ऊर्द्ध्वं वै पुरुषस्य नाभेर्मेध्यं आवाचीनममेध्यमिति श्रुतिः । ऊर्द्ध्वं नाभेः पुरुषः गौर्मेध्यः पृष्ठे पुरस्तादजाः स्त्रियः सर्वतो हृदय मासाम शुचिः ।

---

# अथ प्रेततृप्तिकराणां तिलोदक पिण्ड श्राद्धादीनां प्रयोगः ।

तत्र तावत्तिलोदकस्य–आह याज्ञवल्क्यः—

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।
अपनः शोशुदघमनेन पितृ दिङ्मुखाः ॥

ज्ञातयः–सपिंडाः समानोदकाश्च–सप्त वा दश वा दिनानि यावत्–पितृ दिङ्मुखाः–दक्षिणाभिमुखाः स्नातुं जलं च प्रेताय दातुमपोभ्युपेयुः गत्वा । चापनः शोशुचदघमिति कुत्सदृष्ठयाग्नि देवत्यया गायत्र्या स्नात्वोदकं दद्युः ।

अज्ञातिष्वति देशमाह । याज्ञवल्क्यः—

एवं माता महाचार्य प्रेतानां चोदकक्रिया ।
कामोदकं सखि प्रत्ता स्वस्त्रीय श्वसुरर्त्विजाम् ॥

मातामहादीनां प्रेतानां दौहित्रादिभिः पूर्वोक्तेन प्रकारेणोदक क्रिया कार्य्या सखिप्रभृतीनां कामोदकं कुर्य्यात्–यद्युदकं दातुं कामयते तदा दद्यादित्यर्थः । प्रत्ता अकृत विवाह दुहित्रादिः ।

पारस्करः—

कामोदक मृत्विक् श्वशुर सखि मातुल भागिनेयानाम् उदक दान धर्मविधि माह याज्ञवल्क्यः—

सकृत्प्रसिं चत्युदकं नाम गोत्रेण वाग्यतः ।

उक्त संख्यकेषु दिनेषु प्रत्यहं सकृत् एकवारं ज्ञात्यादय उदकं नाम ग्रोत्राभ्यां वाचं यमाः प्रसिंचेयुः ।

कात्यायनः—

*अथाना पक्षमेत्यापः सर्वएव शवस्पृशः ।
स्नात्वासचैल माचम्य दद्युरस्योदकं स्थले ॥

---

* अथाना पक्षमेत्यापः–इत्ययं पाठः सर्वेषु आदर्शे पुस्तकेषु एकरूप एववर्त्तते–परंत्वयं न समीचीनः ।

गोत्र नाम पदान्ते च तर्पयामीत्यहं वदेत् ।
दक्षिणाग्रान् कुशान्कृत्वा सतिलं तु पृथक् पृथक् ॥

विष्णुपुराणे—

सपिण्डीकरणं यावत् ऋजु दर्भैः पितृक्रिया ।
सपिण्डी करणादूर्द्धं द्विगुणै र्विधिवत् भवेत् ॥

निर्हृत्य बान्धवाः प्रेतं संस्कृत्या प्रदक्षिणेन चितामभिगम्याप्सु सवाससोनिमज्जनं कुर्युः प्रेतस्योदकस्य निर्वपणं कृत्वा एकं च पिण्डं कुशेषु दद्युः ।

वसिष्ठः—

सव्योत्तराभ्यां पाणिभ्यां उदक क्रियां–
कुर्वीरन् अयुग्मान् दक्षिणामुखाः ।

प्रचेताः—

दिनेदिनेऽञ्जलीन् पूर्णान् प्रदद्यात् प्रेत कारणात् ।
तावत् वृद्धिस्तु कर्त्तव्या यावत्पिण्डः समाप्यते ॥

गौतमः—

प्रथम तृतीय पंचम सप्तम नवमे षूदकक्रियाः ।

विष्णुः—

यावदा शौचं तावत् प्रेतस्योदकं पिण्डं च दद्युः ।
रामायणे जलदान वाक्यं राम आह ॥
इदं पुरुष शार्दूल विमलं दिव्य मक्षयम् ।
पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठताम् ॥

ब्रह्मपुराणे—

कर्त्तव्यं तु सचैलन्तु स्नानं सर्वमलापहम् ।
ततः पाषाणपृष्ठेतु सर्वै र्देयं तिलोदकम् ॥

प्रेतस्य सपिण्डै र्दक्षिणामुखै र्जलाशये कृतापसव्यैः सकृदेव स्नात्वा पाषाणस्योपरि प्रेतोद्देशेनाञ्जलिना पितृतीर्थेन तिलोदकं देय मित्यर्थः ।

एकैकेनतु देयास्तु विप्रायांजलयो दश ।
द्वादश क्षत्रिये देया वैश्याय दशपंच च ॥
त्रिंशत् शूद्राय देयास्तु प्रेतभूमिं गताय च ।
अपसव्यं क्वचित् कृत्वा वस्त्र यज्ञोपवीतकैः ॥
दक्षिणाभिमुखै र्विप्रै देयं तस्यांजलि त्रयम् ।
वामाङ्गुष्ठ प्रवाहेण भूमावेवाथवा क्वचित् ॥
असावमुक गोत्रस्तु प्रेतस्तृप्य त्विदं पठन् ॥

अयं तु महापातकरहिताय तिलोदकदानप्रकारः ।

पतिताय त्वन्य एवोच्यते—

पतितस्य तु कारुण्यात् यस्तृप्तिं कर्त्तु मिच्छति ।
स तु दासीं समाहूय सवर्णां दत्त वेतनाम् ॥
अशुद्ध घट हस्तांतु यथावृतं ब्रवीत्यपि ।
हेदासि गच्छ मूल्येन तिलानानय सत्वरम् ॥
तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी ।
उपविष्टा तु वामेन चरणेन ततः क्षिप ।
कीर्त्तयेर्मृत संज्ञानं पिबेति च वदेर्मुहुः ।
निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् ।
एवं कृते भवेत् तृप्तिर्पतितानां न चान्यथा ॥

तिलोदकप्रशंसाचादित्यपुराणे—

यथा योध सहस्रेण वृतो राजानुगच्छति ।
तद्वत् तिल समायुक्तं जलं प्रेतेषु गच्छति ॥

गरुड़पुराणे—

पुत्राद्या वृद्ध पूर्वास्ते एकवस्त्रा शिखांविना ।
प्राचीना वीतिनः सर्वे विशेयुर्मौनिनो जलम् ॥
अपनः शोशुच दघमनेन पितृदिङ्मुखाः ।
जलाव घट्टनं चैव न कुर्य्युः स्नानकारकाः ॥

ततस्तटे समागत्य शिखांबद्ध्वा ऋजून् कुशान् ।
दक्षिणाग्र हस्तयोस्तु कृत्वाथ सतिलंजलम् ।।
आदायांजलिनाथाभ्यां दुःखी पैतृक तीर्थतः ।
एकवारं त्रिवारं वा दशवार मथापि वा ।।
भूमा वश्मनि वा सर्वे क्षिपेयुर्वाग्यताः खग ।
तृप्यन्तु तृप्यतां वापि तर्पयाम्युपतिष्ठताम् ।।
प्रेतैतदमुकगोत्रे त्युक्ते ष्वेवं समुच्चरेत् ।

## अथ प्रेतपिण्डदानप्रयोगः ।

षट्पिण्डानधिकृत्योक्तं गरुड़पुराणे—

षडेव मरणस्थाने द्वारि, चात्वरिके तथा ।
विश्रामे काष्ठचयने चास्थि संचयने खग ।।

तत्र दत्त तिलोदकेषु गृह मागतेषु ज्ञातिष्वाह शङ्खः । दूर्वां प्रवाल मग्निं बृषभं चालभ्य । गृहद्वारे प्रेतायपिण्डंदत्वा पश्चात् प्रविशेयुः ।

प्रेतपिण्डं प्रकृत्याह शुनः शेफः —

द्वारदेशे प्रदातव्यो देवतायतनेषु वा ।

वृद्ध प्रचेतास्त्वाह—

द्वारदेशे प्रदातव्यो न देवायतने क्वचित् ।

आदित्यपुराणेचोक्तम्—

द्वारदेशेषु दातव्यो न देवायतने क्वचित् ।

एवं च देवतायतनस्य विहित प्रतिषिद्धत्वात् विकल्पः । पिण्डो दातव्य इत्यनुवृत्तावस्मिन्नेव पुराणे—

शुचौ तु देशे नद्यां वा जीर्णतोये प्रवाहयेत् ।

पद्मपुराणे—

प्रेताय पिण्डदानन्तु द्वादशाहं समाचरेत् ।
पाथेयं तस्य तत्प्रोक्तं यतः प्रीतिकरं महत् ।।

वाराहपुराणे—

स्थण्डिल प्रेतभागन्तु दद्यात् पूर्वाह्न एव तु ।
कृत्वा तु पिण्ड संकल्पं नाम गोत्रेण सुन्दरि ॥
पश्चादश्नन्ति गोत्राणि सकुल्यास्त्वेक भोजनाः ।
नदद्यादन्य गोत्राय भुञ्जते यत एकतः ॥
चतुर्णामपि वर्णानां प्रेतकार्येषु माधवि ।
एवं दत्तेन प्रीयन्ते प्रेतलोक गता नराः ॥

कूर्मपुराणे—

दशाहं वान्धवाः स्नात्वा सर्वे चैव सु संयताः ।
पिण्डं प्रतिदिनं दद्युः सायंप्रातर्यथाविधिः ॥

ब्रह्माण्डपुराणे—

प्रेती भूतस्य सततं भुवि पिण्ड जलं तथा ।
सतिलं सकुशं दद्याद्बहिर्जल समीपतः ॥

ब्रह्मपुराणे—

ग्रामाद्बहिश्च कर्त्तव्यं जलाशय समीपतः ।
पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥
अरण्ये पिण्डदानं तु मोहान्न क्रियते यदि ।
तदा रौरव मायाति प्रमीतः प्रथमेऽहनि ॥
पुन्नाम संज्ञं त्वपरे महारावं तृतीयके ।
तामिश्राख्यं चतुर्थे तु प्रयात्यपि सुदारुणम् ॥
पञ्चमे चान्धतामिश्रं षष्ठे घोरं च सुप्रभम् ।
अमेध्य पूय सम्पूर्णं सप्तमेऽहनि पातकम् ॥
असिपत्र वनं घोर मष्टमेऽहनि सर्वथा ।
महारौरव संज्ञन्त नवमे याति मानवः ॥
अवीचिरिति विख्यातं दशमेऽहनि भीषणम् ।
तण्डुलैः सक्तुभिः शाकैः फलैर्वा श्रद्धया ततः ॥
देश कालानुसारेण कुर्य्यात् प्रेतस्य तर्पणम् ॥

आह विष्णुः—

यावदा शौचं प्रेतस्योदकं पिण्डमेकं च दद्युः।

ब्रह्मपुराणे—

प्रेताय दिवसे पिण्डो देय एक क्रमेण हि।

आह शातातपः—

त्र्यहा शौचस्यहासेपि पिण्डान् दद्याद्दशैवतु।
पिण्डमेकमथश्राद्धे सम्प्रदद्याद्यथा विधि॥

तत्र त्र्यहा शौचे दशपिण्डदान प्रकारमाह पारस्करः—

प्रथमे दिवसे देयास्त्रयःपिण्डा समाहितैः।
द्वितीये चतुरो दद्यादस्थि संचयनं तथा॥
त्रींस्तु दद्यात् तृतीयेह्नि वस्त्रादि क्षालनं तथा॥

ब्रह्मपुराणे—

सद्यः शौच विषये युगपद्दशपिण्डदानम्।

त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि।
द्वितीये हनि चत्वार स्तृतीये पञ्च चैव हि॥

पारस्करः।

ब्राह्मणे दश पिण्डास्तु क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्त्तिताः॥

उक्त संख्यायामसमर्थान् प्रति पक्षान्तर माह—

प्रेतेभ्यः सर्व वर्णेभ्यः पिण्डान् दद्याद्दशैव तु।
श्राद्धकर्मणि सम्प्राप्ते पिण्ड एको विधीयते॥

आह प्रचेताः—

असंस्कृतानां भूमौ पिण्डं दद्यात् संस्कृतानां कुशेषु।

शुनः पुच्छः—

फल मूलैश्च पयसा शाकेन च गुडेन च।
तिलमिश्रन्तु दर्भेषु पिण्डं दक्षिणतो हरेत्॥

तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च ।
शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ।।
प्रथमेहनियद्द्रव्यं तदेवस्याद्दशाहिकम् ।।

भविष्योत्तरे—

ओदनामिष सक्तूनां शाक मूल फलादिषु ।
प्रथमेहनियद्दद्यात् तद्दद्यादुत्तरे हनि ।।

गृह्य परिशिष्टे—

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेहनि यो दद्यात् सदशाहं समापयेत् ।।

ब्रह्मपुराणे—

प्रथमेहनि यो दद्यात् प्रेतायान्नं समाहितः ।
अन्नं नवसु चान्येषु स एव प्रददात्यपि ।।

भविष्योत्तरे—

गृहद्वारे श्मशाने च तीर्थे देवगृहे तथा ।
यत्राद्यो दीयते पिण्ड स्तत्र सर्वं समापयेत् ।।

आदित्यपुराणे—

तिलमिश्रेषु दर्भेषु कर्त्तावै दक्षिणामुखः ।
नाम गोत्र प्रमाणेन दद्यात्पिण्डं त्वमंत्रकम् ।।
पितृशब्दं स्वधां चैव न प्रयुञ्जीत कर्हिचित् ।
अनुशब्दं तथाचेह प्रयत्नेन विवर्जयेत् ।।
उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ।
तूष्णीं धूपं प्रसेकं च दीपं पुष्पं तथैव च ।
अशुद्धस्त्रिषुवर्णेषु इदं दद्यान्न संशयः ।।

शातातपः—

वाग्यतः प्रयतश्चैव तिष्ठेत्पिंडस्य सन्निधौ ।
ततो बान्धवे निवृत्तेस्य नद्यां तु प्रक्षिपेत्ततः ।।

ब्रह्मपुराणे—

मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः।
लकुटं सर्वदुष्टघ्नं गृहीत्वा तोय मानयेत् ॥
ततश्चोत्तर पूर्वस्यामग्निंप्रज्वालयेद्दिशि।
तण्डुलं प्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत् स्वयम् ॥
सपवित्रैस्तिलैर्मिश्रं कृमिकेश विवर्जितम्।
द्वारोपान्ते ततः क्षिप्त्वा सुशुद्धां गौरमृत्तिकाम् ॥
तत्पृष्ठे प्रस्तरेद्दर्भान् याम्याग्रान् देश सम्भवान्।
ततो वनेजनं दद्यात् संस्मरन् गोत्रनामनी ॥
तिल सर्पि मधु क्षीरैः संसिक्तं तप्तमेव हि।
दद्यात्प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः ॥
फलमूलगुडक्षीर तिलैर्मिश्रं तु कुत्रचित्।
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपै स्तोयैश्च शीतलैः ॥
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत्।
प्रया त यावदाकाशं पिण्डाद् वाष्पमयीशिखा ॥
तावत्तत् संमुखं तिष्ठेत् पिण्डं तोयेक्षिपेत्ततः।
एकस्तोयांजलिश्चैव पात्रमेकं च दीयते ॥
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा।
पञ्चमे पञ्च षष्ठे च सप्तमे सप्त एव च ॥
अष्टमेऽष्टौ च नवमे नवैव दशमे दश।
येनस्युः पञ्चपञ्चाशत्तोयस्यांजलयः क्रमात् ॥
तोय मात्राणि तावन्ति संयुक्तानि तिलादिभिः।
एकादशेन्द्रियवधाः सन्ति बुद्धि वधैः सह ॥
सर्वेषामेव भूतानां परलोक समक्रमे।
प्रेतभावगतानां तु रौरवादिषु वर्त्तताम् ॥
पञ्चभिः पञ्चभिस्त्वेभिः पात्रैरंजलिभिस्तथा।
एकादशैवेन्द्रियाणि पूयन्ते शास्त्र दर्शनात् ॥

वृद्धशातातपोऽपि—

दिनेदिनेऽञ्जलीन् पूर्णान् प्रक्षिपेत् प्रेत कारणात् ।
तावत् वृद्धिश्च कर्त्तव्या यावत् पिण्डः समाप्यते ॥

पिण्डस्योदक दानस्य च फलमुक्तमादित्यपुराणे—

स्वगोत्रा वान्यगोत्रा वा स्त्रियश्च पुरुषा स्तथा ।
प्रेतास्तु पिण्ड सम्बन्धा मुच्यन्ते तेन कर्मणा ॥
वायु भूतास्तु तिष्ठन्ते कालक्षेपेण सर्वदा ॥

ब्रह्मपुराणे—

प्रेताय पिण्डदानन्तु कर्त्तुं गच्छन्ति ये नराः ।
निष्क्रमन्ति गृहात्तेतु ज्येष्ठं कृत्वा पुरः सरम् ॥
ह्रस्वान् पुरः सरान् कृत्वा प्रविशन्ति गृहन्तु ते ।
उल्लंघ्य शस्त्र पाषाणौ प्रविशन्ति गृहं क्रमात् ॥
एकाहं द्वारदेशेतु जलपात्रं निधाय च ।
क्षीरंपात्रं च कारुण्यात् प्रेतायेति विनिश्चयः ॥
प्रेतास्मिन् शीतलेतोये स्नाहि दुग्धं ततः पिव ।
इति जल्पं स्त्रिरात्रं तु भक्त मुष्टिं क्षिपेत् तथा ॥

आह शातातपः—

जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृण्मये ।

आकाशे भूमेरन्यत्र शिक्यादौ प्रेतमुद्दिश्य जलं क्षीरं च पृथक् पृथक् मृण्मयेपात्रे प्रथम महोरात्रं स्थापयेदित्यर्थः ।

अत्र दिनसंख्याधिक्य मुक्तं पद्मपुराणे—

यस्मात् प्रेत पुरीं प्रेतो द्वादशाहेन नीयते ।
गृह पुत्र कलत्रं च द्वादशाहं प्रपश्यति ॥
तस्मान्निधतमाकाशे दशरात्रं पयस्तथा ।
सर्वतापोपशान्त्यर्थं मध्वश्रम विनाशनम् ॥

स्थापयेदिति शेषः ।

## अथ प्रेततृप्तिकर श्राद्धादीनां प्रयोग प्रकरणम् ।

तत्र दशपिण्ड निष्पाद्यावयवा ब्रह्मपुराणादित्यपुराणयोः—

प्रथमेहनि यः पिण्ड स्तेन मूर्द्धा प्रजायते ।
चक्षुषी श्रोत्र नासं च द्वितीयेहनि जायते ।।
भुजौवक्षस्तथाग्रीवा तृतीयेहनि जायते ।
हृदयं कुक्षिरुदरं पंचमेहनि जायते ।।
ऊरू षष्ठे तु विज्ञेयौ सप्तमेऽङ्गुलयस्तथा ।
पादौ तु नवमे ज्ञेयौ दशमे वीर्य्यं चक्षुषी ।।
आदौ विग्रहमुत्पन्नं तथा चैव शुभाशुभम् ।
दशाहे प्रेत पिण्डेन ज्ञानं प्रेतेषु जायते ।
दशाहा क्रियते यस्मात् नामादि ग्रहण क्रिया ।।
सम्भवं नाममात्रेण नामतो जीवसंज्ञकम् ।
नाममात्र प्रतिष्ठा तु अविनष्टे विदुर्बुधाः ।।

तत्र तावन्नवसंज्ञकानां एषां च संख्याधिकारकालाः पूर्वमेव प्रतिपादिताः प्रयोजनं त्वाह व्याघ्रपात्—

देयानि वेश्म शुद्धयर्थं नवश्राद्धानि यत्नतः ।
ततः प्रेत विशुद्धयर्थं मृताहनि तु वत्सरम् ।।

तत इति नवश्राद्धोत्तरकालम् । मासि मासि मृताहे यावत्संवत्सरं प्रेतत्व विमुक्त्यर्थं श्राद्धानि देयानीत्यर्थः ।

वृद्ध वसिष्ठस्त्वाह—

अलब्ध्वा तु नवश्राद्धं प्रेतत्वात्तु न मुच्यते ।
अर्वाक्तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् ।।

अनेन नवश्राद्धानामपि प्रेतत्वविमुक्तिः प्रयोजनमित्युक्तं भवति । दुष्कृतं प्रेतत्व हेतुभूतं द्वादशाहस्यार्वाक् मृताहमारभ्यैकादशाहान्तं श्राद्धानि लब्ध्वा तरति । अनेन द्वादशाहात पूर्वं क्रियमाणानां श्राद्धानां

नवश्राद्ध संज्ञकत्व मपि गम्यते। प्रेतश्राद्धेष्व दत्तेषु प्रेतत्व मुक्तिर्नभवती त्याह यमः—

यस्यैतानि न दत्तानि एकोद्दिष्टानि षोडश।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्ध शतैरपि॥
पिशाचत्वं प्रेत शब्द वाच्य प्राणिरूपत्वम्।
भविष्यत्पुराणे त्वधोगति निवृत्ति प्रयोजन मुक्तम्॥
नवश्राद्धं त्रिपक्षं च षण्मासं मासिकानि च।
न करोति सुतोयस्तु तस्याधः पितरोगताः॥

तथोत्तर श्राद्धाधिकारोप्येषां प्रयोजनमित्यपि तत्रैवोक्तम्—

नवश्राद्धानि श्राद्धानि न कृतानि च यस्यवै।
नाधिकारी भवेत्तत्र मासषाण्मासिकाब्दिके॥

ब्रह्माण्डपुराणे—

नवश्राद्धानि कुर्वीत प्रेतोद्देशेन यत्नतः।
एकोद्दिष्ट विधानेन नान्यथा तु कदाचन॥

आह छागलेयः—

शावेतु सूतकं चेत् स्यान्निशा शौचे तथैव च।
नवश्राद्धानि देयानि यथाकालं यथाक्रमम्॥

अत्र क्रमकालौ पूर्वमेव कालप्रकरणे दर्शितौ। नवश्राद्धेषु केषां चित्पदार्थानामननुष्ठान मुक्तं गृह्य परिशिष्टे—

अनूदक मधू पंच गन्धमाल्य विवर्जितम्।
नवश्राद्धममंत्रं च पिण्डोदक विवर्जितम्॥

अनूदकं-अनर्घ्यं-पिण्डोदक मवनेजन-परिषेचन रूपम्। तथा।

एकोद्दिष्टेषु सर्वेषु न स्वधानाभिरम्यताम्।
नाग्नौकरण मंत्रश्च एकं चाथ तिलोदकम्॥
अनूद्दिश्यतु प्रेताय सर्वत्रैव प्रदीयते।
अनपत्येषु सर्वेषु न स्वधा नाभिरम्यताम्॥

स्वत्यस्तु विसृजेदेवं सकृत्प्रणव वर्जितम् ।
एकोद्दिष्टस्य पिण्डेतु अनुशब्दो न विद्यते ।।
पितृशब्दं न कुर्वीत पितृहा चोप जायते ।।

सपिण्डी करणात्प्राक्तनैकोद्दिष्ट विषय मेतदिति बहुभिर्व्याख्यातम् । प्रेतायेत्यनेन प्रेतशब्दोत्र प्रयोक्तव्यो नतु पितृ शब्द इत्युक्तं भवति ।

आहापस्तम्बः—

नैमित्तिकं श्राद्धं बहिर्ग्रामात् शुचयः शुचौदेशे संस्कुर्वन्ति । तत्र नवानि द्रव्याणि यैरन्नं संस्क्रियते येषु च भुज्यते तानि भुक्तवद्भ्यो दद्यात् समुदितांश्च भोजयेन्न तावद् गुणायोच्छिष्टं प्रयच्छेदेवं सम्वत्सरं तेषां उत्तम लोहेनाजेन कार्य्यं मानं च कारयेत् प्रतिच्छन्ने तस्योत्तरार्द्धे ब्राह्मणान् भोजयेदुभयान् पश्यति ब्राह्मणांश्च भुञ्जानानात्मनैव पितृ नित्युपदिशन्ति । कृताकृतमत ऊर्ध्वं श्राद्धेन तृप्तिं हि वेदयन्ति पितरः । नैमित्तिक शब्देन प्रेत श्राद्धान्युच्यन्ते ।

अतएवाह गालवः—

दाहादारभ्य दातव्यं श्राद्धं नैमित्तिकं बुधैः ।
नियमात् वत्सरं यावदिति गालव भाषितम् ।।

नवश्राद्ध शेषमन्नं यजमानेनान्येन वान भोक्तव्यमिति ।

आहाङ्गिराः—

नवश्राद्धेषु यच्छिष्टं गृहे पर्य्युषितं च यत् ।
दम्पत्योर्भुक्त शिष्टं च तन्न भुञ्जीत कर्हिचित् ।।

कातर्हि नवश्राद्धे शेषस्य प्रतिपत्तिः कर्त्तव्या इत्यापेक्षायामाह देवलः—

एकोद्दिष्टेषु शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत् ।
ततः कामन्तु भुञ्जीत स्वयं मङ्गल भोजने ।।

नवश्राद्ध संज्ञकेष्वे कोद्दिष्टेषु शेषं श्राद्ध भोक्तृभ्यो ब्राह्मणेभ्यः समर्पयेत् । तदनुज्ञया जलादौ वा प्रक्षिपेत् नतु स्वयं भुञ्जीत न चान्यं

कमपि भोजयेत्। ततः तदनन्तरं क्रियमाणे मंगल भोजने सांवत्सरिकादौ श्राद्धशेषं ज्ञात्यादीन् भोजयेत्। स्वयं च यजमानो भुञ्जीत। श्राद्धशेषादन्ये नान्ने नतु ज्ञाति दीनानाथादयो भोजनीयाः। तथाच नवश्राद्धान्यभिधायोक्तं।

ब्रह्मपुराणे—

कर्त्तव्यं तु नरैः श्राद्धं देशकालानुरोधतः।
सपिण्डास्तु सजातीया स्तथान्येपि बुभुक्षिताः॥
दीनानाथाश्च कृपणास्तथान्नमुपभुञ्जते।
अज्ञातिनातु भुक्तेस्मिन्नन्ने प्रायश्चित्तमप्यत्रैवोक्तम्॥
द्वाभ्यान्तु तप्तकृच्छ्राभ्यां शुद्धिस्यातु विवेकिनाम्।
तृतीये पंचमे स्नानं कर्त्तव्यं नवमे तथा॥

इति नवसंज्ञकानां श्राद्धानां प्रयोगः।

## अथैकादशाहिकानां श्राद्धानां प्रयोगः।

तत्र कूर्मपुराणे—

एकादशेह्नि कुर्वीत प्रेतमुद्दिश्य भावतः।
द्वादशेवाह्नि कर्त्तव्यं अनिंद्येप्यथ वाहनि॥
एकं पवित्रमेकोर्घ्यः पिण्डपात्रन्तथैव च।
एवं मृताह्नि कर्त्तव्यं प्रतिमासं तु वत्सरम्॥

पद्मपुराणे—

ततस्त्वेकादशा हेतु द्विजानेका दशैव तु।
गोत्रादि स्वत कान्ते च भोजयेदयुजोद्विजान्॥
द्वितीयेह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत्।
आवाहनाग्नौ करण दैवहीनं विधानतः॥
एकं पवित्रमेकोर्घ्यः एकः पिण्डो विधीयते।
उपतिष्ठन्तांत इति देयं पश्चात्तिलोदकम्॥
स्वदितं विकरे ब्रूया द्विसर्गे चाभिरम्यताम्।
शेषं पूर्व वदत्रापि कार्य्यं वेदविदो विदुः॥
अनेन विधिना सर्वं मनुमासं समाचरेत्॥

ब्रह्मपुराणे—

तृतीयेहनि कर्त्तव्यं प्रेतदाहा बनौ द्विजः ।
सूतकान्ते गृहे श्राद्ध मेकोद्दिष्टं प्रचक्षते ॥
द्वादशेहनि मासे च त्रिपक्षे च ततः परम् ।
मासि मासि तु कर्त्तव्यं यावदा वत्सरं द्विज ॥

मार्कण्डेयपुराणे—

मृताहनि तु कर्त्तव्यं मेकोद्दिष्टं शृणुष्व तत् ।
दैवहीनं तथैकार्घ्यं तथैवैक पवित्रकम् ॥
आवाहनं न कर्त्तव्य मग्नौकरण वर्जितम् ।
प्रेतस्य पिण्डमेकं च दद्यादुच्छिष्ट सन्निधौ ॥
तिलोदकं चापसव्यं तन्नामस्मरणान्वितम् ।
अक्षय्यममुकस्येति स्थाने चैवोपतिष्ठताम् ॥
अभिरम्यता मिति ब्रूयात् प्रयत्नेन विसर्जने ।
प्रतिमासं भवेदेतत् कार्य्यं मावत्सरान्नरैः ॥

भृगुः—

एकोद्दिष्टे कुशाः समूला इति सकृदाच्छिन्न निषेधः । अवनेजनं प्रत्यवनेजनं कुर्य्यात । धूप चंदन माल्यादि च न कुर्य्यात् । शेषमन्नमिति च न वक्तव्यम् । शेषमपि तस्मै दद्यादप्सुवा प्रास्येत् नान्येन भोक्तव्यम् । एकादशाहे साग्निके नापि वैश्वदेवः पश्चात् कर्त्तव्यः ।

तथाच परिशिष्टम् ।

सम्प्राप्ते पार्वण श्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेहनि ॥

तथाच शय्यादि दाने विशेषः ।

यथाह सत्यव्रतः—

सद्यः शौचेपि दातव्यं प्रेतस्यैकादशेहनि ।
स एव दिवसस्तस्य श्राद्ध शय्या सनादिषु ॥

तच्छ्राद्धं न केवलं ब्राह्मणस्यैकादशेह्नि अपितु क्षत्रियादेरप्यस्याद्य श्राद्धस्यायमेव कालः।

तथाच पैठीनसिः—

एकादशेह्नि यच्छ्राद्धं तत्सामान्य मुदाहृतम्।
चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक्॥

नच क्षत्रियादेर शुचित्वेन तत्र श्राद्धानधिकार इत्याशंकनीय मशुद्धस्याप्ययं वाचनिकोधिकार इति।

तथाच शङ्खः—

आद्यं श्राद्धम शुद्धोपि कुर्य्यादेका दशेहनि।
कर्त्तु स्तात्कालिकी शुद्धिरशुद्धः पुनरेवसः॥

आद्यमिति सर्वैरेकोदिष्ट प्रकृति भूतमेकादशाहाख्य मित्यर्थः। एतच्छ्राद्धानन्तरं स्नात्वा भुञ्जीतेति।

तथान्ये विशेषः—

आशिषोद्विगुणा दर्भा जयाशीः स्वस्तिवाचनम्।
पितृ शब्दश्च सम्बन्धः शर्म शब्दस्तथैव च॥
आवाहः पात्र लम्भश्च उल्मुकोल्लेखनादिकम्।
तृप्त प्रश्नश्च विकरः शेष प्रश्नस्तथैव च॥
प्रदक्षिण विसर्गश्च सीमान्तं गमनं तथा।
अष्टादश पदार्थास्तु प्रेतश्राद्धे विवर्जयेत्॥

कात्यायनः—

अथैकोदिष्टमेकोर्घ्यः एकं पवित्रमेकः पिण्डोनावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदित मिति तृप्त प्रश्नः उपतिष्ठतामित्यक्षय्य स्थानेऽभि रम्यता मिति विसर्गोभिरताः स्म इतीतरे।

एकं पवित्रं–एकशिखं पवित्रं।

नागरखण्डेतु द्विशिखमप्युक्तम्—

अछिन्नाग्र मभिन्नाग्रं कुर्य्याद्दर्भ तृण द्वयम्।
पवित्रं तत् विजानीयादेकोद्दिष्टे विधीयते॥

भविष्योत्तरे—

एकादशाहे यच्छ्राद्धं तत्सामान्य मुदाहृतम् ।
एकादशेभ्यो विप्रेभ्यो दद्यादेकादशेहनि ॥
भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने ।
वस्त्रालङ्कार शय्याढ्यं पितुर्यद्वाहनादिकम् ॥
गोगृहासन दासीस्तु दद्यात् सम्पूज्य भक्तितः ॥

वाराहपुराणे—

एकादशाहे कर्त्तव्यं श्राद्धं प्रेताय यत्नतः ।
श्वः करिष्य इति ज्ञात्वा ब्राह्मणा मंत्रण क्रिया ॥
स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत् ।
गतोसि दिव्यलोकं त्वं कृतान्त विहितात्पथः ॥
मनसा वायु भूतेन विप्रे त्वाहं नियोजये ।
पूजयिष्यामि भोगेन एवं विप्रं निमंत्रयेत् ॥
अस्तं गते तथादित्ये गत्वा विप्र निवेशनम् ।
दत्वा तु पाद्यं विधिवत् नमस्कृत्य द्विजोत्तमान् ॥
पादौ संमृज्य तैलेन प्रेतस्यहित काम्यया ।
प्रभातायांतु शर्वर्य्यां मुदिते च दिवाकरे ॥
श्मश्रुकर्म च कर्त्तव्यं नखच्छेदस्तथैव च ।
स्नपनाभ्यंजनं दद्यात् विप्राय विधिपूर्वकम् ॥
गृहीत्वा भूमिभागं च स्थंडिलं तदनन्तरम् ।
निपानदेशं संगृह्य कर्त्तव्यं स्थंडिलं महत् ॥
नदीकुले निवासे वा प्रेतभूमिं विनिर्दिशेत् ।
अकृत्वा पृथिवीभागे निवापं येतु कुर्वते ॥
तदधीनं जगत् भद्रे तदुच्छिष्टं कृतं भवेत् ।
न देवा पितरस्तस्य गृह्णन्तीह कदाचन ॥

पतन्ति निरये घोरे तेनोच्छिष्टे न सुन्दरि ।
सचैलं स्नपनं कृत्वा गत्वा चैव महानदीम् ॥
तीर्थानि मनसा ध्यात्वा तैः स्वमभ्युक्षयेद्बुधः ।
एवं शुद्धिं ततः कृत्वा ब्राह्मणं शीघ्र मानयेत् ॥
आगतं च द्विजं दृष्ट्वा कर्त्तव्या स्वागत क्रिया ।
अर्घ्यं पाद्यं ततः कृत्वा हृष्ट तुष्टे न माधवि ॥
आसनं चोपकल्पेत मंत्रेण विधिपूर्वकम् ।
उपवेश्यासने भद्रे छत्रं तत्र प्रकल्पयेत् ॥
आवरणार्थं तच्छत्रं ब्राह्मणाय प्रदीयते ।
पश्चादुपानहौ दद्यात् पादस्पर्श करे शुभे ॥
सन्तप्त बालुकां भूमि महि कण्टकितां तथा ।
सन्तारयति दुर्गाणि प्रेतन्ददद्दुपानहौ ॥
तिलोपचारं कृत्वा तु विप्राय नियतात्मवान् ।
नाम गोत्र मुदाहृत्य प्रेताय तदनन्तरम् ॥
शीघ्रमाह्वानयेद्भूमिं दर्भहस्तोथ भूतले ॥

मंत्र—

इहलोकं परित्यज्य गतोसि परमाङ्गतिम् ।
एवमाह्वानिते गन्ध पुष्प धूपैः समर्चयेत् ॥
ततो वस्त्राणि विप्राय सर्वान्या भरणानि च ।
ततः पक्वान्नकं चैव कल्पयेच्चैव सुन्दरि ॥
एवंमादीनि द्रव्याणि प्रेतभागानि सर्वशः ।
पाद शौचादितः कृत्वा चातुर्वर्णस्य माधवि ॥

बृहस्पतिः—

एकोद्दिष्ट विधानेन यदैकस्य प्रदीयते ।
आवाहनाग्नौ करण वर्जितं दैव वर्जितम् ॥

वस्त्रालंकारशय्याढ्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥
भोजनं चानेकविधं कारयेत् व्यञ्जनानि च ।
यथाशक्तिः प्रद द्याच्च गो भूहेमादिकं तथा ॥
श्रोत्रिया भोजनीयास्तु नवसप्त त्रयोदश ।
ज्ञातयो बान्धवा वापि तथा वातिथयो परे ॥
प्रदद्याद्दक्षिणां तेषां सर्वेषा मनुरूपतः ।
हतम श्रोत्रियं श्राद्धं हतो यज्ञस्त्व दक्षिणः ॥
तस्मात्पर्णं काकिणीं वा फलं पुष्प मथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तया शतगुणो भवेत् ॥

सत्यव्रतः—

प्रातरुत्थाय प्रेत ब्राह्मणानेकादशा मंत्र्य पराह्णे नाना भक्षान्नरस विन्यासैः एकैकमुद्दिश्य विधिवत्पिण्डदानं वासो हिरण्य दास्युपानच्छत्रोद कुम्भ दक्षिणा गुणवति पात्रे शय्याप्रदानं ततः स्वस्त्ययनादि धर्माः प्रवर्त्तन्ते । दशम्या मती तायामेकैकमुद्दिश्य भोजयेत्तेषा मेवैकस्मै गुणवते शय्या देया ।

लघुहारीतः—

एकोद्दिष्टं प्रकुर्वीत पाकेनैव सदा स्वयम् ।
अभावे पाक मात्राणां तदहः समुपोषणम् ॥

इत्येकादशाहिकानां श्राद्धानां प्रयोगः ।

## अथ मृतशय्यादानविधिः ।

स च जीवच्छय्यादानेति कर्त्तव्यताति देश परिपूरणीय इति तत् पूर्वकोभिधीयते ।

तत्र भविष्योत्तरे—

शय्यादानं प्रवक्ष्यामि तुभ्यं यदुकुलोद्भव ।
यां दत्वा शिव भागीस्या दिहलोके परत्र च ॥

शय्यादानं प्रशंसन्ति सर्वे देव द्विजोत्तमाः ।
अनित्यं जीवितं यस्मात् पश्चात्कोन्यः प्रदास्यति ॥
तस्मात्सबन्धुः सपिता यावज्जीवति भारत ।
मृतोमृत इतिज्ञात्वा क्षणात्स्नेहो निवर्त्तते ॥
तस्मात्स्वयं प्रदातव्यं शय्या भोज्य जलादिकम् ।
आत्मै वह्यात्मनो बन्धुरिति संचित्य चेतसि ॥
आत्मैव यदि चात्मानं दानैर्भोगैर्न पूजयेत् ।
कोन्योहि इतरस्तस्माद्यः पश्चात्पूजयिष्यति ॥
तस्माच्छय्यां समासाद्य सार दारुमयीं दृढाम् ।
दन्तपत्रान्वितां रम्यां हेमपट्टैरलं कृताम् ॥
हंसतूली प्रतिच्छन्नां शुभगण्डोपधानिकाम् ।
प्रच्छादन पटीयुक्तां गन्ध धूपाधिवासिताम् ॥
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ।
उच्छीर्षके घृत भृतं कलशं परिकल्पयेत् ॥
विज्ञेयः पाण्डवश्रेष्ठ सनिद्रा कलशो बुधैः ।
ताम्बूल कुंकुमक्षोद कर्पूरागुरुचंदनम् ॥
दीपिको पानहच्छत्रं चामरासन भाजनम् ।
पार्श्वेषु स्थापयेद् भक्त्या सप्तधान्यानि चैवहि ॥
शयनस्थस्य भवति यदन्यदुपकारकम् ।
भृङ्गारकरकाद्यन्तु पंचवर्णं वितानकम् ॥
शय्यामेवं विधां कृत्वा ब्राह्मणाय प्रदापयेत् ।
सपत्नीकाय सम्पूज्य पुण्येह्नि विधिपूर्वकम् ॥
यथा न कृष्ण शयनं शून्य सागर जातया ।
शय्या ममाप्य शून्यास्तु तथा जन्मनि जन्मनि ॥
यस्माद शून्यं शयनं केशवस्य शिवस्य च ।
शय्या ममाप्य शून्यास्तु तथा जन्मनि जन्मनि ॥

दत्त्वैवं तस्य सकलं प्रणिपत्य विसर्जयेत् ।
एवं शय्या प्रदानेतु विधिरेषः प्रकीर्त्तितः ॥
एकादशाहेऽपि तथा विधिरेषः प्रकीर्त्तितः ।
ददाति यदि धर्मार्थं बान्धवो बान्धवे मृते ॥
विशेषंचात्र राजेंद्र कथ्यमानं निशामय ।
तेनोपभुक्तं यत्किंचित् किंचित्पूर्वं गृहेस्थितम् ॥
तद्गात्र लग्नं च तथा वस्त्र भाजन वाहनम् ।
यद्यदिष्टं च तस्यस्यात्तत्सर्वं परिकल्पयेत् ॥
तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥

पद्मपुराणे—

मृतकान्ते द्वितीयेह्नि शय्यां दद्याद्विलक्षणाम् ।
कांचनंपुरुषं तद्वत्फल वस्त्र समन्वितम् ॥
सम्पूज्य द्विज दम्पत्यं नानाभरण भूषितम् ।
उपवेश्य तु शय्यायां मधुपर्कं ततो वदेत् ॥
रजतस्य तु पात्रेण दधि दुग्ध समन्वितम् ।
अस्थि लालाटं संगृह्य सूक्ष्मं कृत्वा स वज्रकम् ॥
पायसैर्द्विज दम्पत्यं नानाभरण भूषितम् ।
भोजयेत् प्रयतः प्राज्ञो विधिरेषः सनातनः ॥
एष एव विधिर्दृष्टः पार्वतीयै द्विजोत्तमैः ॥

शय्यायां ब्राह्मणोपवेशनविधिर्ब्राह्मण कर्त्तव्यं च वाराहपुराणे—

संगृह्य पाणिनापाणौ मंत्रेणोत्थापयेद्द्विजम् ।
दद्याच्छय्यासनं चैव तथैवां जनकंकतीम् ॥
अञ्जन कंकतीं गृह्यशय्यामाक्रम्यस द्विजः ।
मुहूर्त्तं तत्र विश्रम्य निवापस्थानमागतम् ॥
गवां लांगूल माश्रित्य ब्राह्मं हस्तं समाददेत् ॥

शय्यादान फलं तु भविष्योत्तरे—

स्वर्गे पुरन्दरगृहे सूर्य्य पुत्रालये तथा ।
सुखं वसत्यसौ जन्तुः शय्यादान प्रभावतः ।।
सूर्य्यपुत्रालये चैव तथा वैवस्वते पुरे ।
पीडयन्ति न तं याम्याः पुरुषा भीषणाननाः ।।
न घर्मेण न शीतेन वाध्यते स नरः क्वचित् ।
अपि पाप समायुक्तः स्वर्गलोकं सगच्छति ।।
विमानवरमारूढः सेव्यमानोऽप्सरो गणैः ।
आभूत सप्लवं यावत् तिष्ठत्यातंक वर्जितः ।।
शय्या प्रदान ममलं तव पाण्डुपुत्र
संकीर्त्तितं सकल सौख्य निधान भूतम् ।
यो वै ददाति विधिना सहि विष्णुलोके
कल्पं विकल्परहितः सविभाति मर्त्यः ।।

अत्र प्रसंगात् मृतशय्या प्रतिग्रहनिषेधोभिधीयते ।

पद्मपुराणे—

अतिदुष्टा प्रेतशय्या न ग्राह्या द्विज सत्तमैः ।
गृहीतायां तु तस्यान्तु पुनः संस्कार मर्हति ।।
वेदे चैव पुराणे च शय्या सर्वत्र गर्हिता ।
ग्रहीतारस्तु जायन्ते सर्वे निरयगामिनः ।।

इति शय्यादान विधिः ।

## अथोदकुम्भः ।

एकादशाहा दारभ्य सम्वत्सर पर्य्यन्तं प्रतिदिनं प्रेतायोदकुम्भो दातव्यः ।

तथाच पद्मपुराणे—

उदकुम्भश्च दातव्यो भक्ष्य भोज्य समन्वितः ।
यावद्वर्षं नरश्रेष्ठ सतिलोदक पूर्वकम् ।।

आहहारीतः—

मृते पितरिवै पुत्रः पिण्डं मेध्यं समावपेत् ।
अन्न कुम्भं च विप्राय प्रेत निर्देश धर्मतः ॥

स्मृति समुच्चये—

एकादशाहात् प्रभृति घटस्तोयान्न संयुतः ।
दिने दिने प्रदातव्यो यावत्स्याद्वत्सरः सुतैः ॥

पारस्करः—

अहरहरन्नमस्मै ब्राह्मणायोद कुम्भं च दद्यात् पिण्डमप्येकेनि गृणन्ति ।

याज्ञवल्क्यः—

अर्वाक् सपिण्डीकरणं यस्य सम्वत्सरात् कृतम् ।
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने ॥

आहापस्तम्बः—

यस्य सम्वत्सरा दर्वाक् सपिण्डीकरणं कृतम् ।
अब्दमम्बुघटं दद्यात् प्रत्यहं त्वन्नसंयुतम् ॥

लौगाक्षिः—

यस्य सम्वत्सरा दर्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥

इत्युदकुम्भः ।

## अथ वृषोत्सर्गः ।

तत्र तावदस्य विधि काल देशाः इह चैकादशेऽहनि प्रमीत मनुष्यो देशेन वृषोत्सर्गं कार्य्यं इत्युक्तम् ।

षट्त्रिंशन्मते—

एकादशाहे प्रेतस्य यस्यनोत्सृज्यते वृषः ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्ध शतैरपि ॥

भविष्योत्तरे तु द्वादशेहनि वृषोत्सर्गोभिहितः ।
कार्त्तिक्या मथवामाया मयने वा युधिष्ठिर ।।
चैत्र्यां चापि तृतीयायां वैशाख्यां द्वादशेह्नि वा ।।

विष्णु धर्मोत्तरे तु यस्मिन् कस्मिंश्चिन्मृताहेपि वृषोत्सर्गोभिहितः—

अश्वयुक् शुक्लपक्षस्य पंचदश्यां नराधिप ।
कार्त्तिके प्यथवामासि वृषोत्सर्गं च कारयेत् ।।
ग्रहणे द्वे महामुख्ये तथा चैवायन द्वये ।
विषुवद्वितये चैव मृताहे बान्धवस्य च ।।
उत्सृजेन्नीलकण्ठं वै कौमुद्याः समुपागमे ।।

नीलकण्ठः-नीलवृषः । कौमुदी-आश्विन कार्त्तिकयोः पौर्णमासी ।

पित्राद्युद्देशेन वृषोत्सर्गमकुर्वाणस्य निन्दा मत्स्यपुराणे—

न करोति वृषोत्सर्गं सुतीर्थे वा जलांजलिम् ।
न ददाति सुतोयस्तु पितुरुच्चार एव सः ।।

उच्चारः-पुरीषोत्सर्गः । अत्र नीलसंज्ञकः सर्वोत्तमोवृषः ।

वृषोत्सर्गप्रदेशा देवीपुराणे—

सत्वरण्ये भवेत्तीर्थे उत्सर्गो गोकुलेपि वा ।।

ब्रह्मपुराणे—

प्रागुदक् प्रवणे देशे मनोज्ञे निर्जने वने ।

वृषोत्सर्गः कार्य इति शेषः ।

कालिकापुराणे—

अरण्ये चत्वरे वापि गोष्ठे वामोचयेद्वृषम् ।
नगृहे मोचयेद्विद्वान् कामयन् पुष्कलं फलम् ।।

इति वृषोत्सर्गविधि कालदेशाः ।

## अथ संक्षेपतः वृष लक्षणम् ।

ब्रह्मपुराणे—

वृषभः कृष्ण सारस्तु प्रत्यग्रस्तु त्रिहायनः ।
मनोज्ञो दर्शनीयश्च सर्वलक्षणसंयुतः ॥

आह विष्णुः—

तत्राहवेच वृषभं परीक्षेत जीववत्सायाः पुत्रं सर्वलक्षणोपेतं नीलं लोहितं वा पुच्छपादेषुसर्वंशुक्लं यूथस्याच्छादकम् ।

अथ सर्वोत्तमस्य नील संज्ञकस्य वृषस्यलक्षणम् । रेवाखण्डे—

यस्तुवै पाण्डुरो वक्षे ललाटे चरणे तथा ।
लाङ्गूले यस्तुवै शुभ्रः सवै नाकस्य दर्शनः ॥

कालिकापुराणे—

नीलोत्पलदलप्रख्यः श्वेतांघ्रि चंद्रमस्तकः ।
शुभ्रयुर्वा लोहिताक्षो वृषभोनीलउच्यते ॥

ब्रह्माण्डपुराणे—

लोहितोयस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुर विषाणाभ्यां स नीलोवृषउच्यते ॥

मत्स्यपुराणे—

चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारस सवर्णस्य तन्नीलमिति निर्दिशेत् ॥
वृष एव समोक्तव्यो न स धार्यो गृहे भवेत् ।
तदर्थं मेषा चरति लोके गाथा पुरातनी ॥
एष्टव्या वहवः पुत्रा यद्येकोपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेत् भार्य्यां नीलं वा वृष मुत्सृजेत् ॥

## अथोत्सर्ग विधिः ।

भविष्योत्तरे कृष्णवाक्यम्—

षाण्डं नीलं शङ्खपादं सपौण्ड्रं श्वेतपुच्छकम् ।
गोभिश्चतुर्भिः सहित मुत्सृजेत्तं विधिं शृणु ॥

अथोवाच पुरागर्गो गोकुले नघ पाण्डव ।
तं ते सम्पादयिष्यामि विधिं गृह्य प्रचोदितम् ।।
मातरः स्थापयित्वा च पूजयेत्कुसुमाक्षतैः ।
मातृश्राद्धं ततः कुर्य्यात् सदाभ्युदयकारकम् ।।
अर्कमूलेतु कलशमश्वत्थदल शोभितम् ।
तत्र रुद्रान् जपित्वातु स्थापयेद्रुद्र दैवतम् ।।
सुसमिद्धं ततः कुर्य्याद्वह्निं मंत्रपुरः सरम् ।
आज्येन जुहुयात् षड्भिः पृथगाहुति संस्कृतैः ।।
पौष्ण मंत्रै स्ततः पश्चाद्धुत्वा वह्निं यथाविधि ।
एकवर्णं द्विवर्णं वा रोहितं श्वेत मेव वा ।।
जीववत्स पयस्विन्याः पुत्रं सर्वाङ्गसुन्दरम् ।
चतस्रो वत्स तर्य्यश्च ताभिः सार्द्धमलङ्कृतम् ।।
तासां कर्णे जपेद्विप्रः पतिं वो वलिनं शुभम् ।
ददामि तेन सहिताः क्रीडध्वं हृष्ट मानसाः ।।
ततो वामे त्रिशूलं च दक्षिणे चक्रमा लिखेत् ।
अङ्कितं शूल चक्राभ्यां चर्चितं कुसुमादिना ।।
पुष्पमालावृतग्रीवं सितवस्त्रैश्च छादितम् ।
विसृजेद्वत्सकाभिश्च तिसृभिर्वलिनं वृषम् ।।
देवालये गोकुले वा नदीनां सङ्गमे तथा ।
इत्युक्तं गर्गमुनिना विधानं वृष मोक्षणे ।।

स्त्रीमरणमधिकृत्योक्तम्—

वृषोत्सर्गं न कुर्वीत गांच दद्यात्पयस्विनीम् ।।

अत्र मातृपूजा पूर्वकं अभ्युदयकारकं श्राद्धं कुर्य्यात् इत्युक्तं तेन चाभ्युदयिकं श्राद्धं कर्त्तव्य मेवेति गम्यते। तत्र श्राद्धं कृत्वा श्राद्ध भोक्तृ व्यतिरिक्तानामपि द्विजानां भोजनादिना प्रीणनंकृत्वा तिलोदक दान पूर्वकं पिण्डदानं कर्त्तव्यमित्युक्तं वाराहपुराणे—

श्राद्धं कृत्वा तु सुश्रोणि तर्पणीया द्विजातयः ।
दत्वा तिलोदकं पिण्डं पितृ पैता महेषु च ॥

कलशे रुद्रजपानन्तरं पुरुष सूक्तादि जपोप्युक्तो विष्णुधर्मोत्तरे—

तत्र रुद्रे जपित्वातु स्थापयेद्रुद्रदेवताम् ।
तथैव पौरुषं सूक्तं कूष्माण्डानि तथैव च ॥

रुद्रः—नमस्ते रुद्र मन्यव इत्यादिरध्यायो यजुर्वेदे प्रसिद्धः । पुरुष सूक्तं—सहस्रशीर्षेत्यादिषोडशार्चः । यद्देवा देवहेडन मित्याद्यास्ऋचः कूष्माण्ड संज्ञाः ।

अत्र कश्चिद्विशेषः सौरपुराणे—

रुद्रमावाह्य कलशे गन्धमाल्याक्षतादिभिः ।
सम्पूज्य संस्पृशन् कुम्भं रुद्राध्यायं जपेत्ततः ॥
तथैव पौरुषंसूक्तं गायेद्रौद्रीं च संहिताम् ॥

आवोराजेत्येकं—तद्र इति चत्वारि—आज्य दोहानि त्रीणि—देव व्रतानि त्रीणि इत्येकादश सामानि रुद्रसंहिता । तदुक्तं सामविधानाख्ये ब्राह्मणे—आवोराजा तद्रोवर्ग आज्य दोहानि देवव्रतानि चैषा रुद्रानाम संहिता एतां प्रयुञ्जन् रुद्रं प्रीणाति । इति जपानन्तरं होमः कार्य्यः ।

विष्णुधर्मोत्तरे—

सुसमिद्धं गवां मध्ये सुविस्तीर्य हुताशनम् ।
पयसा श्रपयेद्विद्वान् चरुं पौष्णं समाहितः ॥

अत्रायं क्रमेण होमोभिधीयते । गवां मध्ये रुद्र कलशस्य पश्चाद्भागे परि समूहनादि पंचभू संस्कारान् विधायाग्निमुपसमाधाय दक्षिणतो ब्रह्माण मुपवेश्य उत्तर कर्मोपयुक्तं सर्वमासाद्य आज्यमधिश्रित्य पयसासह तण्डुलान् प्रक्षिप्य पायसं श्रपयित्वा सोदकं तण्डुलं स्थाल्यां प्रक्षिप्य पौष्ण चरुं श्रापयित्वा आज्यादीन्युद्वास्य आज्यं संस्कृत्य समित् प्रक्षेपानन्तरं प्रदक्षिणाग्निं पर्युक्ष्य दक्षिणं जान्वाच्य प्रथम मन्वारब्धे इह रति रिति षडाज्याहुतयो होतव्याः तद्यथा ॐ इह रतिः स्वाहा—इदमग्नये । ॐ इहरमध्वं स्वाहा—इदमग्नये । ॐ इह धृतिः स्वाहा—

इदमग्नये। ॐ इह स्वधृतिः स्वाहा—इदमग्नये । ॐ उपमोषमस्मा सुदीधरत् स्वाहा-इदमग्नये । ततो ब्रह्मणान्वारब्धे प्रजापतये स्वाहा इति मनसाध्यात्वा अग्नावुत्तर तो हुत्वा इदं प्रजापतये इति त्यागः। एष पूर्व आधारः। तत इन्द्राय स्वाहेत्यग्नौ दक्षिणतो हुत्वा इदमिन्द्रायेति त्यागः। एष उत्तर आधारः । अग्नये स्वाहेत्युत्तरपूर्वार्द्धे हुत्वा इदमग्नय इति त्यागः। एष आग्नेय आज्य भागः । सोमाय स्वाहेति दक्षिणपूर्वार्द्धे हुत्वा इदं सामायेति त्यागः। एष सौम्य आज्य भागः। तदनन्तर मन्वारब्धे पायसेन गो यज्ञोक्त देवताभ्यो होमः। तद्यथा-ॐ अग्नये स्वाहा इदमग्नये। ॐ रुद्राय स्वाहा इदं रुद्राय। ॐ सर्व्वाय स्वाहा इदं सर्व्वाय। ॐ पशुपतये स्वाहा इदं पशुपतये । ॐ उग्राय स्वाहा इदमुग्राय। ॐ अशनये स्वाहा इदमशनये। ॐ भवाय स्वाहा इदं भवाया। ॐ महादेवाय स्वाहा इदं महादेवाय। ॐ ईशानाय स्वाहा इदमीशानाय। अथ पौष्ण चरोरेकाहुतिः। ॐ पूषा गा अन्वेतु नः पूषा च रक्षत्वर्वचः पूषा वाजान् सनोतु नः स्वाहा इदं पूष्णे। अथ ब्राह्मणान्वारब्धे स्विष्ट कृन्महा व्याहृतयः सर्व प्रायश्चित्तं प्राजापत्यं चरू जुहुयात्। ततः अग्नये स्विष्ट कृते स्वाहा इदमग्नये स्विष्ट कृते। इति पौष्ण पायसानां स्विष्ट कृद्धोमः। महाव्याहृत्यादि होमस्त्वाज्येन । ॐ भू स्वाहा-इदमग्नये। ॐ भुवः स्वाहा-इदं वायवे। ॐ स्वः स्वाहा इदं सूर्य्याय। इति तिस्रो महा व्याहृतयः। अथत्वन्नो अग्न इत्यादिभिः स्वाहान्तैः पंचभिर्मंत्रैः सर्व प्रायश्चित्तम्। ॐ सत्वन्नो अग्ने० प्रमु मुग्ध्यास्मत् स्वाहा-इदमग्नी वरुणाभ्याम्। ॐ सत्वं नो अग्ने० सुहवो न एधि स्वाहा-इदमग्नी वरुणाभ्याम्। ॐ अयाश्चाग्ने० स्यनभि भेषजं स्वाहा-इदमग्नये। ॐ येतेशतं० स्वर्का स्वाहा—इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः। ॐ उदुत्तमं० अदितये स्याम स्वाहा। इदं वरुणाय। अथ प्राजापत्यम्। ॐ प्रजापतये स्वाहा इदं प्रजापतये। ततः संश्रव प्राशनं-मार्जनं-पवित्र प्रतिपत्तिः। दक्षिणादानमिति । एवं होमं परिसमाप्य। वृषस्याङ्कनादिकं कुर्य्यात्।

तत्राहविष्णु—

गवां मध्ये सु समिद्धमग्निं परिस्तीर्य पौष्णं चरुं श्रपयित्वा पूषाभि गन्धे तुम इह रति रिति च हुत्वा वृषभ मानीया यस्करमावाहयेत्।

अयस्करः–लोहकारः।

सौरपुराणे—

ततो वृषभ मानीय अग्नेरुत्तरतः स्थितम्।
सव्यस्फिचि लिखेच्चक्रं शूलं वाहौ तु दक्षिणे ॥

सव्यस्फिचि–वाम कटिभागे।

कुङ्कमेनाङ्कयित्वादौ ब्राह्मणः सुसमाहितः।
तप्तेन धातुना पश्चादयस्कारोऽङ्कयेत्वृषम् ॥

देवीपुराणे—

तप्तेन वामतश्चक्रं पार्श्वे शूलं समालिखेत्।
धातुना हेमतारेण आयसेनाथ वाङ्कयेत् ॥

हेमं–सुवर्णं–तारं–रूप्यं–आयसं–लोहम्।

विष्णुधर्मोत्तरे—

अङ्कितं स्नापयेत्पश्चात् स्नाने तस्य तथा पठेत्।
हिरण्यवर्णेति ऋचश्चतस्रो मनुजेश्वर ॥
आपोहिष्ठेति तिस्रश्च शन्नोदेवीति चाप्यथा।

हिरण्यवर्णाः शुचयः पावका–इत्याद्या।श्चतस्रोभिषेचनीया ऋचोऽथर्ववेदे प्रसिद्धाः।

पारस्करः—

अकालमूलान् कलशा नष्टौ स्रग्दाम भूषितान्।
सवस्त्रांश्च सरत्नांश्च चूतपल्लव शोभितान् ॥
स्थापयित्वा चतुर्भिस्तु संस्नाप्यो वृषभः पुरः।
चतुर्भिर्वत्सिका स्नाप्या स्ततः सर्वान् विभूषयेत् ॥
ऋचः समुद्र ज्येष्ठाश्च कीर्त्तयेदभिषेचने ॥

समुद्र ज्येष्ठाः सलिलस्य मध्यादित्याद्या ऋचो वह्वृचानां प्रसिद्धाः।

एतच्च वृषस्य वत्सिकानां च स्नापनादिकम् तस्य ताभिः सहविवाहं कर्तुम्। एतच्च वत्सिका संख्यादि विधिपूर्वकं देवीपुराणे स्पष्टीकृतम्—

चतस्रो वत्सिका भद्राद्वेचा सम्भवतोपि वा ।
वत्सः सर्वाङ्ग सम्पूर्णः कन्यकावशिका भवेत् ।।
अलंकृत्य यथा शोभ मुत्सर्गं कारयेच्छुभे ।
विवाहस्त्वेक वत्सर्या नीलेन भवते सदा ।।

कन्यका—अनुभूत मैथुना। एक वत्सरी—एक वर्ष वयस्का।

तथा—

अष्टाभिर्धेनुभिर्युक्त श्चतुर्भिरथवाक्रमात् ।
त्रिहायनीभिर्धन्याभिः सुरूपाभिश्च शोभितः

त्रिहायन्यः—त्रिवर्ष वयस्काः।

विष्णुधर्मोत्तरे—

अलं कुर्यात् ततः पश्चाद्गन्धमाल्यैश्च शक्तितः ।
किंकिणीभिश्च रम्याभिस्तथा चीनांशुकैः शुभैः ।।
घंटा लोहकृतां दद्यात् शृङ्गे च पटलं शुभम् ।।

पटलं—सुवर्णादि निर्मितः कोशः।

पारस्करः—

अथालंकृत्य तान्सर्वान् रुद्राध्यायं समाहितः ।
श्रावयेत्पौरुषं सूक्तं तथा प्रतिरथानि च ।।

आशुः शिशानो वृषभो न भीम इत्याद्या द्वादश ऋचः प्रतिरथ संज्ञा।

आदित्यपुराणे—

सावित्रीं च जपेत्तत्र तथा चैवाघमर्षणम् ।
कर्णजपं च दद्यात्तु वृषभस्य न संशयः ।।

विष्णुधर्मोत्तरे—

ततोऽङ्किते जपेन्मंत्र मिमं प्रयत मानसः ।
वृषोसि भगवान् धर्मश्चतुष्पादः प्रकीर्त्तितः ॥
वृणोमितमहं भक्त्या समां रक्षतु सर्वतः ।
इति प्राथ्र्य वृषेन्द्रन्तं गृहीत कुसुमांजलिः ॥
त्रिःप्रदक्षिणमावृत्य नमस्कुर्यात् यथाविधि ।
प्रत्यङ्मुखानान्तु गवामेतावान् विधि रिष्यते ॥
अथैशान्याभिमुखतः कुर्य्यात् गावो वृषन्तथा ।
गावो वृषस्यो भयतो वृषंमध्ये निवेश्य च ॥
सर्वेषां कण्ठ वस्त्राणि श्लेषयेत्तु परस्परम् ।
अयं हि वो मयादत्तः सर्वासां पतिरुत्तमः ॥
तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः ।
संयोज्येति वृषं ताभिः पितृभ्यस्तं निवेदयेत् ॥
सव्येन पाणिना पुच्छं समालम्ब्य वृषस्य तु ।
दक्षिणेनाप आदाय सतिलाः सकुशास्ततः ॥
ततो गोत्रं समुच्चार्य अमुकस्म इति ब्रुवन् ।
वृष एव मयादत्तस्तं तारयतु सर्वदा ॥
सहेम सतिलं भूमा वित्युच्चार्य विनिक्षिपेत् ॥

इदन्तु पारस्करेणैक प्रमीतोद्देशेन वृषोत्सर्ग वाक्यमुक्तं। अनेक प्रमीतोद्देशे न तु नीलोत्सर्गे मंत्र उक्तः।

वाराहपुराणे—

नराये चात्र तिष्ठन्ति पतिताः पितृ बान्धवाः ।
तेषाम्भवत्वयं त्राता नीलो मुक्तो यथाविधिः ॥
गृहीत्वोदुम्बरंपात्रं कृत्वा कृष्ण तिलोदकम् ।
करेण पुच्छमादाय पितृणा मुत्सृजेत् वृषम् ॥

उदुम्बरं–ताम्रम् ।

ब्रह्मपुराणे—

स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये ।
मातृपक्षाश्चये केचित् ये चान्ये पितृपक्षजाः ॥
गुरु श्वशुर बन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेत भाव मापन्ना ये चान्ये श्राद्धवर्जिताः ॥
वृषोत्सर्गेण ते सर्वे लभन्तां तृप्तिमुत्तमाम् ।
दद्यादनेन मंत्रेण तिलाक्षतयुतं जलम् ॥
पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणाम् ॥

अनेन मंत्रेण बहु पित्र्युद्देशेन वृषमुत्सृजेत् ।

विष्णुः । एतं युवानंपतिवो ददामि तेन क्रीडन्तीश्चरथ प्रियेण । माहास्महि प्रजसां मातनूभिर्मोरं धामद्विषते सोमराजन् । अनेन मंत्रेण वृषं वत्सतरी युक्तमैशान्यां कालयेद्दिशि ।

कालयेत्—प्रणोदयेत् ।

अथ मोक्तव्यस्थानमाहपारस्करः—

बहुतोयतृणेरण्ये क्षेपणीयः सगोपतिः ।
वत्सतर्य्यश्चताः सर्वास्तेनैव सहकालयेत् ॥
अथवा गोकुलेक्षेप्या बहु गोधनसंकुले ॥

अत्र निर्जने येनकेनापि यत्किंचिदुत्सृष्टन्तदन्येन केनचिन्नेयं नच विभाज्यमिति ब्राह्मणान्प्रति दातुरुक्तिः ।

पारस्करः—

निष्क्रान्ते गोपतौ तत्र ब्राह्मणान्स्वस्तिवाचयेत् ।
दद्याच्च दक्षिणां तेषां ब्राह्मणान् भोजयेत्ततः ॥
सहिरण्यं रुद्रकुम्भं तथा स्नान घटानपि ।
होत्रे प्रदद्यात्तत्सर्वं धेनुं चैव पयस्विनीम् ॥

विष्णुधर्मोत्तरे—

वासो युगं होतुरथ प्रदेयं
सुवर्णयुक्तं सघृतं च कांस्यम् ।
शिल्पि प्रधानस्य तथैव मूल्यं
देयं तथा तुष्टि मुपैति राजन् ॥
विप्रास्तथान्नं दधि सर्पिषायुतं
सम्भोजनीयाः पयसा च मिश्रम् ॥

तच्च ब्राह्मण भोजनं रुद्रस्याग्रे कर्त्तव्यम् ।

रुद्रस्याग्रे भोजयेच्च ब्राह्मणान्वै यथाविधि ॥

एवं विधिना मुक्तस्य वृषभस्य धारणादि निषेधमाह पारस्करः—

विधारयेन्नतं कश्चिन्न च कश्चिन्न वाहयेत् ।
न दोहयेच्चतां धेनुं नच कश्चन बन्धयेत् ॥

शिवधर्मोत्तरे—

ये वृषाः साधुभिमुक्ताः त्रिशूलांकाः शिवप्रियाः ।
तान् वाहयन्ति ये मूढाः पापाचारा नराधमाः ॥
ते महाप्रलयं यावदशेष नरकादिषु ।
पच्यन्ते विविधैर्घोरैः पत्नीपुत्रादिसंयुताः ॥
राज्ञश्च विषयेयस्य जनायत्र नराधमाः ।
वाहयन्ति वृषं पापाः पापन्त स्यापि तत्समम् ॥
तस्मान्निवारयेद्राजा वाह्यमानांश्चतैर्वृषान् ॥

देवीपुराणे—

एवं वृषोत्सर्ग विधिं नरो यः
करोति भक्त्या निज पूर्वजानाम् ।
उद्धृत्यतान् दुर्गति पंकमग्नान्
स्वयं सलोकं समुपैति शम्भोः ॥

यद् भूमिमा लिखति शृङ्गखुरैः सदृप्तो
यद्धां करोति प्रतिमल्ल वृषान्निरीक्ष्य ।
कालं समस्तमपि तत्सविवाहकर्तुः
सन्तोषमा वहति शक्र सभागतश्च ॥

इति वृषोत्सर्गः ।

## अथ सपिण्डीकरणकालः ।

तत्र यथाकालं द्वादशसु मासिकेष्वनुष्ठितेषु पूर्णे सम्वत्सरे तदूर्द्धं मौत्सर्गिकोऽनग्नि सपिण्डीकरणस्य कालः । तथाच मार्कण्डेयपुराणे मासिकान्तानि श्राद्धान्युक्त्वाभिहितम्—

अथ सम्वत्सरे पूर्णे यथावत् क्रियते नरैः ।
सपिण्डीकरणं सम्यक् तत्रापि विधिरुच्यते ॥

अस्य च कालस्यानग्निमत्कर्तृकानग्निमद्दैवत्य सपिण्डीकरणाङ्गत्वं नैमित्तिकञ्च कालान्तर मुक्तं भविष्यत्पुराणे—

सपिण्डीकरणं कुर्य्याद्यजमानो ह्यनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्वेद्युर्भरतर्षभ ॥

उक्तं च पुलस्त्येन—

निरग्निः सहपिण्डत्वं पितुर्मातुश्च धर्मतः ।
पूर्णे सम्वत्सरे कुर्य्याद्वृद्धिर्वा यदि वा भवेत् ॥

वृद्धिः चौड मौञ्जी विवाहादि रूपोऽभ्युदयः । उपलक्षणञ्चैतन्नान्दी श्राद्ध निमित्त भूतस्य कर्म मात्रस्य । एतच्चा धानाद्युपसंप्राप्ता वित्युशनो वचने-कर्त्तुं नान्दीमुखं-इति शाट्यायनिवचने च स्फुटी भवति । सैषा यस्मिन् दिने वृद्धिरापद्यते ततः प्रागेवापकृष्य सपिण्डीकरणं कृत्वा तदङ्गभूतं नान्दीमुखसंज्ञकं कुर्य्यादित्यर्थः । अनेन प्रवृत्ताधिकारस्यापरि समापित प्रेत श्राद्धस्य चौड मौञ्जी विवाहा धानादौ तदङ्गभूते च नान्दी श्राद्धेऽनधिकारोऽपि दर्शितः ।

आह लघुहारीतः—

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च ।
सहपिण्ड क्रियां कृत्वा कुर्य्यादाभ्युदयं ततः ॥

नागरखण्डे—

ततः सपिण्डीकरणं वत्सरादूर्द्धतः स्थितम् ।
वृद्धिर्वा गामिनी चेत्स्यात्तदर्वागपि कारयेत् ॥

आधानाङ्गभूतान्नान्दीश्राद्धात् प्रागपकर्षमभि प्रेत्याहोशनाः—

पितुः सपिण्डीकरणं वार्षिकं मृत वत्सरे ।
आधानाद्युप सम्प्राप्ता वेतत् प्रागपिवत्सरात् ॥

अत्र चापकृष्यमाण सपिण्डीकरणे तदन्त मपकर्षेस्यादितिन्यायात्पूर्वाणि मासिकान्यपकृष्य सपिण्डीकरणं कर्त्तव्यम् ।

वृद्धवसिष्ठोऽप्याह—

श्राद्धानि षोडशा दत्वा न तु कुर्य्यात्सपिण्डनम् ।
तद्धानौतुयतः प्रेतः पितृत्वं न प्रपद्यते ॥

अपकर्षपक्ष एवैतत् । अनपकर्षे क्रमविधानादेव तत्सिद्धेः ।

अतएव शाट्यायनिः ।

प्रेत श्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।
अपकृष्य प्रकुर्वीत कर्त्तु नान्दीमुखं द्विजः ॥

व्याघ्रत्त्व गेन रहिता नामपिसहषोडशभिः श्राद्धैः सपिण्डीकरणस्य द्वादशाह एव प्रशस्तः ।

कालइत्याह—

आनन्त्यात् कुलधर्माणां पुसांचैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥

इति सपिण्डीकरणकालाः ।

## अथ सपिण्डीकरणप्रयोगः ।

तत्र सम्वत्सर पर्य्यन्तं प्रेतार्थानि कर्माण्यभिधायोक्तं मार्कण्डेयपुराणे—

अथ सम्वत्सरे पूर्णे यथावत् क्रियते नरैः ।
सपिण्डीकरणं श्राद्धं तत्रापि विधिरुच्यते ॥

अत्र-संवत्सरे पूर्णे-इत्ययमौत्सर्गिकः कालः कारणान्तर प्रयुक्तास्त्व संपूर्णेपि संवत्सरे यस्यापवादिकाः कालास्ते सर्वेपि पूर्वमेव प्रतिपादिताः। अचिर प्रमीत प्रेतीभूत मनुष्योद्देशेनैकोद्दिष्ट विधिना पितृत्वप्राप्त तत्पूर्व मनुष्योद्देशेन पार्वण विधिना युगपदेक प्रयोगात्मकत्वेन ब्राह्मण भोजने ऽनुष्ठीयमाने प्रेतार्घ्योदकं पित्रर्घ्यपात्रेषु प्रेतपिण्डं च पितृपिण्डेषु विभज्य प्रक्षिप्यत इति सपिण्डीकरणस्यविधिरुच्यते भविष्यत्पुराणे—

पात्राणि कृत्वा चत्वारि पूरयित्वा तिलाम्बुभिः।
त्रिष्वेकं पितृपात्रेषु प्रसिंचेन्नाम गोत्रतः॥

याज्ञवल्क्यः—

गन्धोदकतिलैर्युक्तं कुर्यात्पात्र चतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
ये समाना इति द्वाभ्यां शेषं पूर्व वदाचरेत्।
एतत्सपिण्डीकरण मेकोद्दिष्टं स्त्रिया अपि॥

गन्धैश्चन्दनादिभिरुदकेन तिलैश्चयुक्तं पात्रचतुष्टयं प्रेतादिभ्योऽर्घ्य पात्रं कुर्य्यात्। तत्र प्रेतायार्घ्यंदत्वा शेषं तत्पात्रस्थं जलं पितामहादि पात्रेषु ये समाना इति द्वाभ्यां मंत्राभ्यां यथाक्रमं पितृ दैवत्यां प्रसिंचेत्। शेषं तु कर्म ब्राह्मण निमंत्रणादि पार्वण वदाचरेत। एतदुक्त प्रकारं पितामह दैवत्यं पार्वणं प्रेतदैवत्यं चैकोद्दिष्ट श्राद्धं सपिण्डीकरण संज्ञकं वेदितव्यम्। स्त्रिया अपि चैतत कार्य्यं न पुनः पुरुस्यैव।

कूर्मपुराणे—

सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः।
कुर्य्याच्चत्वारिपात्राणि प्रेतादीनां द्विजोत्तमाः॥
प्रेतार्घ्यं पितृपात्रेषु पात्रमासे च येत्ततः।
ये समाना इति द्वाभ्यां पिण्डा नप्येव मेवहि॥

ब्रह्मपुराणे—

चतुर्भ्यश्चार्घ्यपात्रेभ्य एकं वामेन पाणिना।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम्॥

संसृजतु त्वा पृथिवी ये समाना इति स्मरन् ।
प्रेतायचार्घ्यपात्रस्य चतुर्भागं जलं क्षिपेत् ॥
ततः पितामहादिभ्य स्तन्मंत्रैश्च पृथक् पृथक् ।
ये समाना इति द्वाभ्यां तज्जलं तु समर्पयेत् ॥
अर्घ्यन्ते नैव विधिना प्रेतपात्राच्च पूर्ववत् ।
तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमा च मेत् ॥
अथ तेनैव विधिना दर्भमूले वनेजनम् ।
पितुर्दत्वातु पिण्डन्तु दद्याद्भक्त्या तु पूर्ववत् ।
दत्वा पिण्ड मथाष्टाङ्गं ध्यात्वा तन्त्रस्थमीश्वरम् ।
सुवर्ण रूप्य दर्भैस्तु तस्मिन् पिण्डं तत स्त्रिधा ।
कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् ॥
संसृजत्वानु पृथिवीं वायुरग्नि प्रजापतिः ।
एतन्मंत्रं जपेद्भक्त्या समानीवन्त मेव च ॥*
ये समाना इतिं द्वाभ्यां पितृभ्यः प्रेतमर्पयेत् ।
सुवर्त्तुलां स्ततस्तां स्त्रीन् पिण्डान् कृत्वा प्रपूजयेत् ॥
अर्घ्यपुष्पैस्तथाधूपै र्दीपमाल्यानुलेपनैः ।
मुख्यन्तु पितरं कृत्वा मुनयश्च यथाक्रमम् ॥

तत्राहतुरुशना सुमन्तू—

सपिण्डीकरणं श्राद्धं देवपूर्वं निवेदयेत् ।
पितृना वाहयेत्तत्र पुनः प्रेतं विनिर्दिशेत् ॥
सपिण्डीकरणे वीर कुर्याच्छ्राद्धद्वयं नृप ।
एकोद्दिष्टं पार्वणं च इत्याह भगवान् शिवः ॥

---

* पाठोऽयमादर्श पुस्तकानुसारेण मुद्रितः परन्त्वयं न समीचीनो विभाति ।

वृद्ध शातातपः—

निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः ।
ये समाना इति द्वाभ्या माद्यन्तु विभजेत् त्रिधा ॥

कठ परिशिष्टे—

दत्वा पिण्डान् पितृभ्यो पश्चात् प्रेताय धर्मतः ।
तन्तु पिण्डं त्रिधा कृत्वा आनु पूर्व्याच्चु संततः ॥
निदध्यात् त्रिपुपिण्डेषु एष संसर्जने विधिः ॥

ब्रह्मपुराणे—

सपिण्डीकरणात् पूर्वं प्रेतो भवति वै मृतः ।
कृते सपिण्डीकरणे पितृत्वं प्रतिपद्यते ॥

तथाच ब्रह्मपुराणे—

मृते पितरि यस्याथ विद्यते तु पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामह पूर्वकाः ॥
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत् ।
न देयो जीवते पिण्डः सच यस्मान्मृतो भवेत् ॥
पिण्डस्तु जीवितो हस्ते शिरश्छेद समोभवेत् ।
मातर्य्यथ मृतायान्तु विद्यते च पितामही ॥
प्रपितामहीतः सर्वः कार्य्यस्तत्राप्ययं विधिः ॥

पितामहे ध्रियमाणे यदि पिता प्रमीतः स्यात् पितामहं परित्यज्य प्रपितामहात् प्रभृति पुरुष त्रयेण सह सपिण्डीकरणं कार्य्यम् ।

## अथ स्त्रीसपिण्डीकरणम् ।

एवमेव ध्रियमाणायां पितामह्यां मातुः सपिण्डीकरणे यथोक्तः पितृ सपिण्डीकरण न्याय एवानुसन्धेयः ।

अथ स्त्रीसपिण्डीकरणेऽन्योपि विशेष उच्यते । तत्र तावद्भविष्यत्पुराणे शतानीकः प्रश्नभङ्ग्या सन्देह मुपन्यस्यति—

मातुः सपिण्डीकरणं कथं कार्य्यं भवेत्सुतैः ।
मातामहे न संयोज्या किंवा पतिकुलं नयेत् ॥

अत्र निर्णयं वर्ण यिष्यन्नाह सुमन्तुः ।
अहोवत् महत् कष्टं दुर्विज्ञेयं त्वयेरितम् ॥
द्विभावोह्यत्र लोकानां तथापि श्रूयतां नृप ।
ध्रुवाद्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ॥
ध्रुवाश्चेमेनगाः सर्वे ध्रुवाः पतिकुले स्त्रियः ॥

अनेन मातामहादिभिः सह सपिण्डनीयेत्यमुं पूर्वपक्षं विधाय पतिकुलेनसह संयोजनीयेति सिद्धान्त मित्यव गम्यते । किं चमृताया अपि नार्य्याः पिण्डोदकादिषु भर्तृगोत्रयोगो दृश्यते न तद्वियोगः ।

तथाच हारीतः—

स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे ।
स्वामि गोत्रेण कर्त्तव्या स्तस्याः पिण्डोदक क्रियाः ॥

उशना आह—

एकत्वं सागता भर्त्तुः पिण्डे गोत्रे च सूतके ।
तस्मादुदक पिण्डौ तु भर्त्तृ गोत्रेण निर्वपेत् ॥

बृहस्पतिः—

चतुर्थी होम मंत्रैस्तु मांसमज्जा स्थिभिः सह ।
एकत्वमागता भर्त्तु स्तस्मात्तद् गोत्रभागिनी ॥
पाणिग्रहणिका मंत्राः पितृगोत्रापहारकाः ।
भर्त्तुर्गोत्रेण नारीणां देयं पिण्डोदकं ततः ॥

तथा —

भर्त्तृगोत्रेण नाम्ना च मातुः कुर्य्यात्सपिण्डनम् ।
तूष्णीं दम्पति पिण्डाभ्यां कुशैरन्तरयन् पितॄन् ॥
अन्तरयन्–तिरोदधानः ।

आह व्यासः—

श्वशुरस्याग्रतो यस्मात् शिरः प्रच्छादन क्रिया ।
पुत्रैर्दर्भेण साकार्य्या मातुरभ्युदयार्थिभिः ।

तदेवं पितृकुलेन सहभार्य्यायाः सपिण्डनं कर्त्तव्यमिति स्थितम्। तत्रापि केन सहेति संशय पूर्वकत्वमाह शातातपः—

मातुः सपिण्डीकरणं कथं कार्य्यं भवेत्सुतैः।
पितामह्याः सहैवास्याः सपिण्डीकरण क्रिया॥

पितामही प्रपितामही बृद्धप्रपितामहीभिः सहेत्यर्थः। अत्र पक्षा न्तरमाह गार्ग्यः—

पत्यैवेकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियः।
सामृतापिहितेनैक्यं गता मंत्राहुति ब्रतैः॥

मंत्राः। यदे तद्हृदयं तव तदस्तु हृदयं ममेत्यादयः मंत्राहुतयः। स्मृत्यन्तरेऽपि—

मातुः सपिण्डीकरणं पत्यासार्द्धं विधीयते।
यस्मात्पतिव्रतानां हि सएव गति रिष्यते॥

उक्तं च भविष्यत्पुराणे—

पुरुषस्यार्द्ध देहन्तु भार्य्या वेदेषु गीयते।
अर्द्धोहि वात्मनो ह्येष यज्ञायेतिहवै नृप॥
तस्मात्पत्यासहै वास्याः सपिण्डीकरणं स्मृतम्।
विवाहे चैव निर्वृत्ते चतुर्थे हनि रात्रिषु॥
सन्धितासा यतो मंत्रैरस्थिमांस त्वगादिभिः॥

मंत्रास्तु–प्राणैस्ते प्राणान् सन्दधाम्यस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति।

तदेवं केषुचिद्वचनेषु मातुः पितामह्यादिभिः सह सपिण्डीकरणं कर्त्तव्यमित्युक्तं केषुचिच्च पत्यासहेति। तत्रैव विषय व्यवस्था भविष्यत्पुराणे—

जीवत्पिता पितामह्या मातुः कुर्य्यात्सपिण्डनम्।
प्रमीत पितृकः पित्रा तत्पित्रा पुत्रिका सुतः॥

तत्पित्रा–मातुः पित्रेत्यर्थः।

ब्रह्माण्डपुराणे—

मातुः सपिण्डीकरणं कार्य्यं सम्वत्सरे सुतैः ।
पितामह्या सहैवास्याः पतिर्यदितु जीवति ॥

आह लौगाक्षिः—

पितामह्यादिभिः स्त्रीभिर्मातरन्तु सपिण्डयेत् ।
पितरिध्रियमाणेतु तेनैवो परते सति ॥

आह शातातपः—

मृतायानुगतानाथं सातेन सहपिण्डताम् ।
अर्हति स्वर्गवासं च यावदा भूत सम्प्लवम् ॥

एवं च सति पितरि जीवति पितामह्यादिभिरेव सह सपिण्डीकरणं कार्य्यं—प्रमीतेतु पितर्य्यन्वारूढायां मातरि पित्रैव सह सपिण्डीकरणम् । अनन्वा रूढाया मपि पितामह्यादिभिर्वा सहेति व्यवस्था प्रतिपादिता भवति । यदित्वनन्वा रूढाया मपि मातरि पित्रैव सह सपिण्डनं स्यात् तदान्वारूढाविषयं वचनमनर्थकं भवेत् । तस्यान्वारूढा भर्त्रैव सह सपिण्डनीयेति नियामकत्वेन सार्थकत्वे प्रमीत पितृकः पित्रेति वचनं न नियम परं शक्यं वक्तु मित्य नियम सिद्धिः । यत्पुनरपरार्के जीवन्त्यां पितामह्यां पित्रैव सह मातुः सपिण्डीकरण मित्युक्तं । तन्न । एवं विधे विषये प्रपितामह्यादिभिः सह सपिण्डीकरणस्य ब्रह्मपुराणोक्तस्य दर्शितत्वात् ।

अथवास्तु पितृ पितामह्यो रुभयोर्जीवने ब्रह्मपुराणोक्तं प्रपिता मह्यादिभिः सह सपिण्डीकरणम् । जीवन्त्यां पितामह्यां मृते च पितरि पित्रैव सह सपिण्डन मिति व्यवस्था ।

यत्वाह शातातपः—

मृते पितरि मातुस्तु न कार्य्या सहपिण्डता ।
पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् ॥

तदत्यन्ताशक्त पुत्र विषयम् । केषाञ्चित्वा मत मित्यनुसन्धेयम् ।

यदातु पतिः पत्न्याः सपिण्डीकरणं कुर्य्यात् तदा स्वकीय मात्रादिभिरेव सहेत्याह पैठीनसिः—

अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥

व्यासः—

अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम् ।
श्वश्रुभिस्तिसृभिः सार्द्धं एवं धर्मेण युज्यते ॥

तदेवमेतावता प्रपंचेन पितामह्यादिभिः पित्रा वा सहभर्तृकुल एव मातुः सपिण्डीकार्य्यमित्युक्तम् । अस्ति च मातामह कुलेऽपि सपिण्डीकरणं कार्य्यमित्यपिपक्षः ।

आहापस्तम्बः—

कोकिलस्य यथा पुत्रा अन्य सम्बन्ध जीविनः ।
पुष्टास्ते स्वकुलं यान्ति एवं नारी मृता सती ॥

भविष्यत्पुराणे—

आकाशस्थं यथा तोयं पतितं धरणीतले ।
योनिं स्वकीयां गच्छेत्तु तथा नारी मृता सती ॥
पितुर्गोत्रं समुत्सृज्य न कुर्य्यात् भर्तृ गोत्रतः ।
जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम् ॥
गवां शतसहस्रेषु वत्सोविन्दति मातरम् ।
एवं स्त्री पैतृकं याति त्यक्त्वा पतिकुलं नृप ॥
त्यक्त्वा स्थलं यथा ह्यापो निम्नं यान्ति नराधिप ।
तथा पतिकुलं हित्वा मृतानारी स्वकं ब्रजेत् ॥
पिता पितामहे योज्यः पूर्णे सम्वत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवान् शिवः ॥

तथाच ब्रह्माण्डपुराणे—

पितुः पितामहे यद्वत् पूर्णे सम्वत्सरे सुतैः ।
मातुर्मातामहे तद्वदुशनोक्ता स पिण्डता ॥

तदेवं पितृकुलेन सह सपिण्डनीयेति कैश्चित् प्रतिपादितम् । मातामहकुलेन वैस्यपरैरिति विरोधे विषय व्यवस्थोच्यते । ब्राह्म दैवर्षि प्राजापत्याख्यानां विवाहा नामन्य तमेन परिणीतायाः पतिकुलेन सह संयोजनं तद् गोत्रेण पिण्डदानादिकं कर्त्तव्यम् । साह्यनौपाधिकेन दानेन पित्रा परिणेतृ स्वामिका कृतेति स्मृतापि न तत् कुल गोत्रे परित्याज यितुं योग्या । गान्धर्वासुर राक्षस पैशाचा नामन्य तमेन तु परिणीताया मातामह कुलेन सह संयोजनं तद् गोत्रेण पिण्डादि दानं च कर्त्तव्यम् । नहि सास्वरूप्या पित्रानिष्प्रति द्वन्द्वं वराय दत्तेति न मातामह कुलात् तद्गोत्राच्च प्रच्याव यितुं योग्या ।

अत्राह वृहच्छातातपः—

ब्राह्मादिषु विवाहेषु या रूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्याः तस्याः पिण्डोदक क्रियाः ॥
आसुरादिषु चान्येषु पितृगोत्रेण धर्मवित् ॥

अत्र प्रकारान्तरेण व्यवस्था ।

अत्राह व्यासः—

मातामहस्य गोत्रेण मातुः पिण्डोदक क्रियाम् ।
प्रकुर्य्यात् पुत्रिकापुत्र एष धर्मः सनातनः ॥
पत्यासहैकता तावत् यावत् पुत्रो न जायते ।
पुत्रिका या सुतोत्पत्तौ पत्यैकत्वं निवर्त्तते ॥

अत्रापि व्यवस्थोच्यते ।

ये नास्य पितरो याता येन याता पितामहाः ।
येन याताः सतां मार्गास्तेन गच्छन्न दुष्यति ॥
तस्मात् कुल क्रमायातमाचारं च चरेत् बुधः ॥

इति वचनात् यैस्तु कुलपरम्परया पितृकुलेन सहसपिण्डनं क्रियते तैस्तथा कार्य्यमन्यैस्त्वन्यथेति । इति सपिण्डन प्रकरणम् ।

अथैताः सपिण्डीकरणान्ताः प्रेतक्रियाः केषाञ्चित् संवत्सरात् प्राक् नारायणवलिमकृत्वा च न कार्य्याः ।

तत्राह गौतमः—

पापकर्मणो न संसृजेरन् स्त्रियश्चाभिचारिणीः ।

वृद्ध याज्ञवल्क्यः—

सर्प विप्रहतानां च शृङ्गि दंष्ट्रि सरीसृपैः ।
श्राद्धमेषां न कर्त्तव्यं ब्रह्मदंड हताश्चये ॥

संवर्त्तः—

महापातकिनां चैव तथा चैवात्मघातिनाम् ।
उदकं पिण्डदानं च श्राद्धं चैव तु यत् कृतम् ॥
नोपतिष्ठति तत्सर्वं राक्षसैर्विप्र लुप्यते ॥

स्मृत्यन्तरात्—

विद्युद्गो नृप विप्राम्बु शृङ्गिदंष्ट्र्यग्निघातिताः ।
वृथोत्पन्न महाक्लीव व्रतिनो नोदभाजनाः ॥

उदभाजनाः—अर्घ्योदक संसर्ग भाजना इत्यर्थः ।

भविष्योत्तरात्—

स्वेच्छया मरणं विप्रात् शृङ्गिदंष्ट्रि सरी सृपैः ।
अन्त्यान्त्यज विषोद्बन्धै रात्मना चैव ताडनैः ॥
सम्पूर्ण सर्व गात्राणां विवादा कर्पतोऽथवा ।
जलाग्नि गर्भपातैश्च निराहारादिभिस्तथा ॥
येषामेवं भवेत्तेवै कथिताः पापकर्मिणः ।
पापण्डमाश्रितां चैव महापातकिन स्तथा ॥
स्त्रियश्च व्यभिचारिण्य आरूढ पतितास्तथा ।
न तेषां स्नान संस्कारौ न श्राद्धं न सपिण्डनम् ॥
श्राद्धानि षोडशोक्तानि नान्यान्यपि भवन्ति हि ॥

साग्निकमधिकृत्य—

वैतानं प्रक्षिपेत्तोये गृह्याग्निश्च चतुष्पथे ।
पात्राणि निर्दहेदग्नौ साग्निके पापकर्मणि ।।

षट्त्रिंशन्मते—

व्यापादयेद्य आत्मानं स्वयमग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्योदक क्रिया ।।
सर्प विप्रहतानां च शृङ्गि दंष्ट्रि सरी सृपैः ।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् ।।
चांडाला दुदकात्सर्पाद् ब्राह्मणा द्वै द्युतस्तथा ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ।।
उदकं पिण्डदानं च श्राद्धं चैव तु यत् कृतम् ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे च तिष्ठति ।।
नारायणवलिः कार्य्यो लोक गर्हा भयान्नरैः ।
तस्मात्तेभ्योपि दातव्यमन्नमेव सदक्षिणम् ।।
तस्मादिति शब्दान्नारायणवलेरनंतरम् ।।

स्मृत्यन्तरे—

कृत्वा चांद्रायणं पूर्वं क्रियाः कार्या यथाविधि ।
नारायणवलिः कार्य्यो लोकगर्हा भयान्नरैः ।।
अन्नमिष्टं प्रियं चैव विप्रे दद्यात् सदक्षिणम् ।
पिण्डोदकक्रिया पश्चाद् वृषोत्सर्गादिकं चयत् ।।
एकोद्दिष्टानि कुर्वीत सपिण्डीकरणं तथा ।।

योऽयमग्न्युदकादि मृतानां नारायणवलिरुक्तः स तु क्रोध मद शोकादि योगेन यैरात्मघातिनस्तेषामेव नतु प्रमादतो विदितो वा ।

तथाच भविष्योत्तरे—

अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
संस्कार प्रमुखं तस्य सर्वं कुर्य्यात् यथाविधि ।।

क्वचिदेतस्यापवादमाह—

प्रमादादिच्छया वापि नगच्छेत् सर्पतो मृतः ।

न गच्छेत्–संस्कारादि कर्म प्रति न गच्छेत्–वक्ष्यमाण प्रकार नागपूजां बिना तन्नार्हतीत्यर्थः ।

षट्त्रिंशन्मते—

अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
तस्या शौचं विधातव्यं कर्त्तव्याचोदकक्रिया ।।

बौधायनः—

बुद्धि पूर्वाङ्ग हन्तृणां क्रियालोपो विधीयते ।
तेषा मेवच संस्कर्त्तुर्दोषश्रुतिरुदाहृता ।।
दाहयित्वा शवं तेषां शूद्रैरेव विधर्मकम् ।
अन्येषां पाप मरणं प्राप्तानां पापकर्मणाम् ।।
पूर्ववद्देह दाहोथ शरीरस्य प्रकल्पनम् ।
पालाशवृन्तैः संस्कुर्य्यात्पितृमेध विधानतः ।।

आहिताग्नीनां पाप मृतानां प्रतिकृति वर्जनं मुख्यमेव शरीरं । आहिताग्नि मग्निभिर्दहन्ति यज्ञपात्रैश्चेत्येते न संस्कुर्वन्ति ।

आह ब्रह्मगर्गः—

योऽनुष्ठातु न शक्नोति महाव्याध्युपपीडितः ।
सोऽग्न्युदक महायात्राः कुर्वन्नामुत्रदुष्यति ।।

विवस्वान्—

सर्वेन्द्रिय विरक्तस्य वृद्धस्य कृत कर्मणः ।
व्याधितस्य स्मृतन्तीर्थे मरणं तपसोधिकम् ।।

तथा गार्ग्योऽपि गृहस्थमेवाधिकृत्याह—

महाप्रस्थान गमनं ज्वलनाम्बु प्रवेशनम् ।
भृगु प्रपतनं चैव वृथा नेच्छेत्तु जीवितुम् ।।

भृगुः पर्वतकटकः। वृथा धर्मानुष्ठान शून्यम्।

मनुर्वान प्रस्थसधिकृत्याह—

'अपराजितां' चास्थाय वृजेद्दिशमजिह्मगः।
आतिपाताच्छरीरस्य ब्रह्मलोके महीयते॥

'अपराजिता' पूर्वोत्तरा-तामा शरीरपाताद कुटिलं जलमनिलं वाभक्षयन्न समाहितो व्रजेत्।

स्थित्वासहर्षिचर्यायां त्यक्त्वा पापमयींतनुम्।
वीतशोकभयोविप्रो ब्रह्मभूयाय कल्पयते॥

गो ब्राह्मण हतानान्तु विशेषः षट्त्रिंशन्मते—

गो ब्राह्मण हतानांच पतितानां तथैव च।
ऊर्ध्वंसम्वत्सरात् कुर्यात् सर्वमेवौर्ध्व देहिकम्॥

सर्वेषां निवन्धकाराणां महर्षिणांच वचनात् बुद्धिपूर्वाङ्ग हन्तॄणां पापमरणं प्राप्तानामेव नारायणवलिः कार्यो नान्येषां साधारणतया मृतानाम्। अस्मिन् काले आधुनिका विद्वांसः सर्वेषां साधारणतया मृतानां नारायणवलिं कारयन्ति तस्यमूलं न दृश्यते तन्नसमीचीनम्।

## अथ नारायणावलिप्रयोगः

तत्र तावत् संस्कारादि विधेः बौधायन सूत्रे। अथातो नारायणवलिं व्याख्यास्यामोऽभिशस्त-पतित सुरापात्म त्यागिनां ब्राह्मणहतानांच द्वादश-वर्षाणि त्रीणिवा यत्र यत्र मरणंजातं यस्यस्यात्तत्र तत्र कुर्वीत। सहितानां पलाशानां ग्रामेवाहूय। पर्ण सरूपाणां कृष्णाजिने पुरुषाकृतिं करोति होतृकल्पनेन वापितृ मेधिकेन वा संस्कारं कुर्यात्। अङ्ग प्रयोगमन्त्रानुद्धृत्य पुरुषसूक्तस्य प्रत्यृचं मन्त्राणां स्थाने पृथक् प्रयोगो भवति इत्यपिवातूष्णीं सर्वं क्रियेत याम्यसूक्तो न पोषणं पौरुषेणोपस्थानं समान मन्यत्तीर्थे स्नात्वा प्रेतायोदकक्रियां कृत्वा नाम गोत्रं मनसाध्यात्वा नारायणायै तत्ते उदक मितिचाभिव्याहरे देव मेव सायं प्रातर्दशरात्रं करोति त्रिरात्रेण वा पिण्ड

प्रदानेऽसावे तत्ते पिण्ड इति विशेषः । एकादश्या मेकोद्दिष्टं कुर्वन्ति नारायणवलि प्रयोगस्तु षट्त्रिंशन्मते दर्शितः—

तेषां पुत्राश्च पौत्राश्च दायादाः समभिप्लुताः ।
यथा श्राद्धं प्रतन्वन्ति विष्णुनाम प्रतिश्रुतम् ॥

अत्र विशेषो भविष्योत्तरे—

पूर्णे सम्वत्सरे तेषामथ कार्य्यं दयालुभिः ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ॥
विष्णुं यमं च सम्पूज्य गन्ध पुष्पादिभिस्तथा ।
दशपिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ॥
यज्ञोपवीती सतिलान् ध्यायन् विष्णुं यमं तथा ।
दक्षिणाभिमुखस्तूष्णी मेकैकं निवपेत्तुतान् ॥
उद्धृत्यनियतान् पिण्डां स्तीर्थाद्यम्भसि निक्षिपेत् ।

एतच्च विष्णुध्यानपूर्वकं कर्तव्यमित्युक्तम् ।

षट्त्रिंशन्मते—

विष्णुं बुद्धौ समासाद्य नद्यम्भसिततः क्षिपेत् ।

भविष्योत्तरे—

क्षिपंस्तान् कीर्त्तयेन्नाम विष्णोर्वै प्रेतकस्य च ।

गोत्रंच मृतकस्यत्वित्यपिपाठः —

पुनरभ्यर्चयेत् विष्णुं यमं कुसुम चंदनैः ।
धूप दीपैः सनैवेद्यैः भक्ष्य भोज्य समन्वितैः ॥
तस्मिं चोपवशेदह्नि विप्रांश्चैव निमंत्रयेत् ।
कुलविद्यातपोयुक्तान् रूप शील समन्वितान् ॥
नवसप्ताथवापञ्च स्वसामर्थ्यानुसारतः ॥

बौधायनसूत्रे—

अथातो नारायणवलिं व्याख्यास्यामः । दक्षिणायने वोत्तरायणे वा अपर पक्षस्य द्वादश्यां क्रियेत पूर्वेद्युः षट् द्वादश वा ब्राह्मणान्निमंत्रयेत योनि गोत्र श्रुत वृत्त सम्पन्नान् ।

भविष्योत्तरे—

अपरेऽहनि सम्प्राप्ते मध्याह्ने सुसमाहितः ।
विष्णुं यमं च सम्पूज्य विप्रांस्तानुपवेश्य च ॥
उदङ्मुखान् यथा ज्येष्ठं पितृरूप मनुस्मरन् ।
आवाहनार्घ्य दानादीन् विष्णु सौरि समन्वितान् ॥
प्रेत स्थाने स्मरन् प्रेतं विष्णोर्वैनाम कीर्त्तयेत् ।
यज्ञोपवीती कुर्वीत प्रेत नाम प्रकीर्त्तयेत् ॥
प्रेतं यमं च विष्णुं च स्मरन् श्राद्धं समापयेत् ॥

वौधायनसूत्रे—

तथापरेद्युर्देवगृहे नदीतीरे अग्निमुपसमाधाय सम्परिस्तीर्य्य प्रणीताभ्यः कृत्वोत्थायाग्रेणाग्निदेवतामावाहयति पुरुषसूक्तेन द्वे ऋचौ जपित्वा व्याहृतिभिर्देवतामावाहयति । अथैनं स्नापयति पुरुष सूक्तेनाथैनं गन्ध पुष्प धूप दीपैरष्टात्तरेणार्चयित्वाद्भिस्तर्पयति केशवं तर्पयामीति द्वादशनामधेयैः परिधान प्रभृत्याग्निमुखात् कृत्वा पक्वान्नाज्जुहोति विष्णोरनुक्कमिति पुरोनुवाक्यामनूच्य परो मात्रयेति याज्यया जुहोति आवाह्याहुतीरुपजुहोति केशवाय स्वाहेत्येतेरेव नाम धेयैर्गुड पायस घृत मिश्रमन्नं निवेदयति देवस्य त्वा सवितुः प्रसवेश्विनोर्वाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे निवेदयामीति सप्तव्याहृतिभिः स्वाहाकारेण जपति । व्याहृतिभिराचमनीयमथ ब्राह्मणानाहूय सदर्भोपक्लृत स्थानेषूपवेश्याथैतान् वस्त्र गन्ध धूप दीप माल्यैरभ्यर्च्यानुज्ञाप्य घृत मिश्रं हविः समिधा युज्यहस्तेन जुहोति पितृभ्यः स्वधा नमो नारायणाय स्वाहेति पितामहेभ्यः स्वधा नमो नारायणाय स्वाहा अग्नये कव्यवाहनाय स्विष्ट कृते स्वधा नमो नारायणाय स्वाहेति ब्राह्मणानन्नेन परितोषयित्वेति । वक्ष्यमाणं कुर्य्यादिति शेषः ।

भविष्योत्तरे—

तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
अन्नेभ्यस्त्वथ सर्वेभ्यः पिण्डदानार्थमुद्धरेत् ॥

पृथक् दर्भेषु पिण्डांस्तु पञ्चदद्यात् क्रमेण तु ।
प्रथमं विष्णवे दद्यात् ब्रह्मणे च शिवाय च ॥
सभृत्याय यमायाथ प्रेतायापि च पञ्चमम् ।
नाम गोत्रं स्मरेत्तस्य विष्णुशब्दञ्च कीर्त्तयेत् ॥
नमस्कार शिरस्कन्तु पञ्चमंपिण्डमुद्धरेत् ।
दद्यादाचमनं पश्चात्ताम्बूलं दक्षिणान्तथा ॥
एकं विप्रं श्रेष्ठतमं हिरण्येन प्रपूजयेत् ।
गो भूमि वस्त्र पानाद्यैः शक्त्या प्रेतं स्मरंश्चतम् ॥
ततस्तिलांस्तु विप्राणां दर्भयुक्तेषु पाणिषु ।
नाम गोत्रं स्मरन् दद्याद्विष्णुप्रीतोस्त्वति ब्रुवन् ॥
अनुव्रज्य द्विजान् पश्चात्तिलाम्भो दक्षिणामुखः ।
कीर्त्तयेन्नाम गोत्रे तु भुवि प्रीतोस्त्वति क्षिपेत् ॥
मित्र बन्धु जनैः सार्द्धं शेषं भुञ्जीत वाग्यतः ॥

बौधायन सूत्रे—

आचमय्य तेषां यथाशक्ति दक्षिणां ददाति । प्रदक्षिणी कृत्य शेष मनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु वलिं ददाति विश्वेभ्यो देवेभ्यो नमः साध्येभ्यो देवेभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्वाभ्यो देवताभ्यो नमः विष्णवे नारायणाय नमः यज्ञात्मने नमो यज्ञपुरुषाय नमः सर्वेश्वराय नम इति स्विष्ट कृत्प्रभृति सिद्ध मा धेनुवर प्रदानात् सर्वान् पितॄन् समधिगच्छति ब्रह्मलोके महीयते ब्रह्मलोके महीयते इत्याह भगवान् बौधायनः ।

नारायणवलिं प्रकृत्य भविष्योत्तरे—

एवं कृते गमिष्यन्ति स्वर्लोकं पापकर्मिणः ।
सपिण्डीकरणादौ तु कृते नैवाप्नुवन्ति ते ॥
एवं विष्णु मते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरन्ति तं क्षिप्रं नात्र कार्य्या विचारणा ॥

इति नारायणवलि प्रयोगः ।

## अथ नागपूजाविधिः ।

भविष्योत्तरे—

प्रमादादिच्छया वापि नागाद्वासर्पतो मृतः ।
पक्षयोरुभयोर्नागान् पञ्चमीषु प्रपूजयेत् ॥
कुर्य्यात् पिष्टमयीं लेखां नागप्रतिकृतिं भुवि ।
अर्चयेत्तां सितैःपुष्पैः सगन्धैश्चन्दनेन तु ॥
प्रदद्याद्धूप दीपन्तु तण्डुलांश्च सितान् क्षिपेत् ।
आमपिष्टं तथैवान्नं क्षीरं च विनिवेदयेत् ॥
उपास्याथ वदे देवं मुञ्चमुञ्चामुकं त्विति ।
मधुरं तद्दिनेदद्या देवमब्दं समाचरेत् ॥
सौवर्णं शक्तितो नागं ततोदद्याद् द्विजोत्तमः ।
गांसवत्सान्ततोदद्यात् प्रीयतां नागराडिति ॥
यथा विभागं कुर्वीत कर्माणि प्राक्तनान्यपि ।
नागाद्विमोक्षणार्थन्तु प्रोक्तमभ्यधिकं त्विदम् ॥
द्विजान् विमोक्षयित्वातु सम्प्रीताः सन्तु पन्नगाः ।

इति नागपूजाविधिः ।

## अथप्रोषित मृतदाहादिप्रयोगः ।

तत्र षट्त्रिंशन्मते—

देशान्तरगताः केचिददृष्टाये मृताः श्रुताः ।
कथं तेषां क्रियाः कार्या दहनाद्याः सविस्तराः ॥

अत्रकाल विशेष माहबृद्धमनुः—

प्रोषितस्य यदा कालो गतश्चेत् द्वादशाब्दिकः ।
प्राप्ते त्रयोदशेवर्षे प्रेतकर्माणि कारयेत् ॥

भविष्योत्तरे—

पितरि प्रोषिते तस्य न वार्त्तानैव वागमः ।
ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम् ॥

कुर्यात्तस्य तु संस्कारं संस्कारविधिना ततः ।
तदादीन्येव सर्वाणि शेषकर्माणि कारयेत् ॥

अत्र प्रतिरूपकरणमस्थ्नामलाभ एवं वेदितव्यम् । तत्सद्भावेतु शस्त्रान्तरोक्तो विशेषः ।

तद्यथा—

अत्र प्रोषित मृतस्य विशेषः कथ्यते । प्राग्दाहादग्निहोत्रं होतव्यं प्राचीना वीतिना सपरिस्तरणं पर्य्युक्षणं न कुर्य्याद्दक्षिणतः उष्णा भस्म निरूहणम् । तत्राधिश्रयणं नावद्योतनासेकः दक्षिणत उद्वासनं सकृन्निधानं प्रैषरहितं सकृदुन्नयनं स्रुचः सामिद्धाहरणं सव्यजानु निपातनं समिदाधानं सकृत् सर्वप्रक्षेपः ततः कृष्णाजिनेऽस्थ्नां पुरुषाकृति करणं घृताभ्यंजनं ऊर्णाभिः प्रच्छादनं पूर्ववत् पात्रयोजनं सन्तापजाग्निर्निर्वाहः । चतुर्थेऽह्नि सञ्चयनादि पूर्ववदिति ।

षट्त्रिंशन्मते—

दाहस्तस्यास्थिनाशे तु ब्रह्मदर्भैः कृतस्य तु ।
उक्तं कात्यायने नेदं प्रेताभावे मनीषिणा ॥
कुर्य्याद्दर्भमयं प्रेतं कुशैस्त्रिशत षष्टिभिः ।
पलाशैर्वा समिद्भिस्तु सङ्ख्याचैवं प्रकीर्त्तिता ॥
प्रेताकारन्ततः कुर्य्याद्धस्तपादादि चिन्हितम् ।
अपेत इति जप्त्वावै दहेत विधिपूर्वकम् ॥

अत्र शिरोग्रीवादि प्रेतशरीरावयवभेदेन कुशादेः संख्या विभाग माह यज्ञपार्श्वः—

चत्वारिंशच्छिरः स्थाने ग्रीवायां च दशैव तु ।
उरःस्थाने शतन्दद्यात् षष्टिश्च जठरोदरे ॥
वाह्वोः स्थाने शतन्दद्यात् विंशतिर्जानुजङ्घयोः ।
दद्याच्चत्वारि शिश्नेतु षड्दद्याद्वृषणद्वयोः ॥
पादाङ्गुलिषु च दश कल्पयेदस्थिसंचयम् ।

ऊर्णाभिः प्रच्छाद्य घृतेनाभ्यज्य पूर्ववत्पात्रयोजनंकृत्वा सन्ताप जाग्निभिरेवदहेदिति ।

भविष्योत्तरे—

शिरस्य शीत्यर्द्धंदद्यात् ग्रीवायां च दशैव तु ।
बाह्वोश्चैव शतन्दद्यात् विंशतिश्च तथोरसि ।।
उदरे विंशतिं दद्यात् त्रिंशच्च कटिदेशयोः ।
उर्वोश्चैव शतंदद्यात् त्रिंशच्च जानुजङ्घयोः ।।
पादांगुलीषु च दश एषा च प्रेत कल्पना ।

अत्र कृष्णाजिने कुशैः पुरुषाकृतिं कृत्वा पलाशवृन्तनिधानं तत्रैव संख्याविभाग इति मधुशर्ममिश्राः ।

तदाह वृद्धमनुः—

अमृतं मृतमाकर्ण्य कृतं यस्यौर्द्ध्व देहिकम् ।
प्रत्यागतश्चेत् जानाति पूर्ववृत्तं गृहे तदा ।।
प्रायश्चित्तमसौ स्मार्त्तं कृत्वाग्नीनादधीत चेति ।।

प्रायश्चित्तमत्र जात कर्मादि विवाहान्तं पुनः संस्करणं वेदितव्यम् ।

अतएवोक्तंतेनैव—

द्वादशाहं वृतचर्या त्रिरात्रमथ वास्य तु ।
स्नात्वोद्वहेत् ततो भार्या मन्यां वातद् भावतः ।।
अग्नीनाधाय विधिवद् व्रात्यस्तो मेनवायजेत् ।
तथैन्द्राग्नेन पशुना गिरिङ्गत्वातु तत्र तु ।।
इष्टिमायुष्मतीङ्कुर्या दीप्सितांश्चक्रतूंस्ततः ।

आयुष्मतीमिष्टिम्—आयुः कामेष्टिमित्यर्थः ।

इति प्रोषितमृतदाहादिप्रयोगः ।

## अथापात्रक पार्वणश्राद्धमधिकृत्यविधि बोधकानि वचनानि लिख्यन्ते ।

तत्र तावत् श्राद्धार्थं स्वीकृत देशे आचार्य्यादि यथागतान् ब्राह्मणान् भक्तिमानपुरः सरं पृथक् पृथगासनेषूपवेश्य तेषां पुरतः कुशोपस्कृतायां भुवि यज्ञोपवीतिः प्राङ्मुख उपविश्य प्रमादकृता विज्ञाता शुचित्व निवृत्यर्थं शुचित्वातिशयार्थं वा प्रथमतः पुण्डरीकाक्षस्मरणं कुर्य्यात् ।

अतएवाह क्रतुः—

अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥

अनन्तरं च पृथिवी स्तुतिः कर्त्तव्या ।

वाराहपुराणे—

प्रणम्य शिरसा देवि निवापस्थानमागतः ।
स्तुवीतानेन मंत्रेण त्वाञ्च भक्त्या व्यवस्थितः ॥
मेदिनी लोकमाता च क्षितिरुर्व्वीधरा मही ।
भूमिः शैल शिलाचत्त्वं स्थिरा तुभ्यं नमोनमः ॥
धरणी काश्यपी क्षौणी रसा विश्वम्भरा च भूः ।
जगत्प्रतिष्ठा वसुधा त्वं हि मातर्नमोस्तुते ॥
वैष्णवी भूतदेवी च पृथिवी त्वं नमोस्तुते ॥

ततः श्राद्धदेशं गयात्मकत्वेन तदेक देशस्थितं गदाधरं च ध्यात्वा तयोश्च नमस्कारं कृत्वोत्तरं कर्म प्रवर्त्तयेत् ।

तदुक्तं ब्रह्माण्डपुराणे—

श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्याञ्चै च नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेत् ॥

श्राद्धारम्भात्पूर्वं जप्यमाह प्रचेताः—

अपसव्यं ततः कृत्वा जप्त्वा मंत्रं तु वैष्णवम् ।
गायत्रीं प्रणवं वापि ततः श्राद्धमुपक्रमेत् ॥

अत्र द्विजोत्तर वाक्यसहितं प्रश्नवाक्यं ब्रह्माण्डपुराणे—

श्राद्धं करिष्य इत्येवं पृच्छेद् विप्रान् समाहितः ।
कुरुष्वेति च तैरुक्तो दद्याद्दर्भासनन्ततः ॥

प्रश्नानन्तरं कुरुष्वेति ब्राह्मणैरनुज्ञातो वैश्वदेविकपूर्वकं दर्भासनानि दद्यात् । दर्भासनदानात्पूर्वं त्रिवारं जप्यः सप्तार्चिर्मंत्र उक्तः विष्णु धर्मोत्तर–ब्रह्मवैवर्त्त ब्रह्म पु० वायु पु० प्रभासखण्ड भविष्योत्तरेषु—

पाप्मापहं यावतीयमश्वमेध समन्तथा ।
मंत्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितम् ॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥
आद्यावसाने श्राद्धस्य त्रिरावर्त्तं जपेत् सदा ।
पिण्ड निर्वपणे वापि जपेदेनं समाहितः ॥

अत्रावसरे नीवीबन्धो विधेयः ।

भविष्यत्पुराणे—

बध्नीयात्तु तथा नीवीं नच प्रेक्षेत दुर्जनम् ।
स्यात्कर्त्ता नियतस्त्वेवं यावच्छ्राद्धं समाप्यते ॥

नीवीर्नामात्र सतिलकुशानां परिहित वस्त्रोत्तराञ्चलदशानां वाम कटि संलग्न वस्त्र वहिर्भागेन सम्वेष्टय गोपनम । अत्र तिलाक्षत गौर सर्षपानां विकरणम् ।

विष्णुधर्मोत्तरे—

अपयंत्वसुराद्वाभ्यां यातुधान विवर्जनम् ।
तिलैः कुर्य्यात्प्रयत्नेन अथवा गौरसर्षपैः ॥
अक्षतै देंवतारक्षां चक्रे चक्र गदाधरः ॥

## अथावाहनविधिः ।

ततः निमंत्रणानन्तरं ।

रक्षणाय ततो देवान् विश्वाख्यांस्तत्र योजयेत् ॥

आह छागलेयः—

विष्टरार्थं ऋजून्दर्भान् प्रदायापस्तथैव च ।

आवाहयेदनुज्ञातो विश्वेदेवाननुस्मरन् ॥

अत्र दर्भान्प्रदायेत्यनेन दर्भासन दानस्या वाहनात् पूर्वकालताया मभिधीय मानायामपि स्मृत्यन्तरानुसारान्मध्ये निमंत्रणानुष्ठानेपि पूर्वं कालता श्रुतिविरोधाभावः पूर्ववदत्राप्यनुसन्धेयः। अनुस्मरन्निति विश्वेषां देवानामुत्पत्ति महिमस्वरूपाणि पूर्वोक्तान्यनुचिन्तयन्। अनुज्ञात इत्यत्र वैश्वदेविकैर्द्विजैरिति विशेषो व गम्यते ।

उक्तञ्च विष्णुपुराणे—

कुर्यादावाहनं प्राज्ञो देवानान्तदनुज्ञया । इत्यनेन पार्वणादिषु पुरुरव आर्द्रवः संज्ञकान् विश्वान्देवानावाहयिष्ये इत्यादि प्रकारकं प्रश्न वाक्यं निष्पद्यते। येषान्तु विशेषनाम ज्ञानं नास्ति तैस्तु विश्वान् देवाना वाहयिष्य इत्ये तावन्मात्रं प्रयोज्यम् ।

सहितानां देवपितॄणामावाहन प्रश्नोत्तरे प्रार्थना विशेषञ्चाह ।

शौनक सूत्रे पिप्पलाद सूत्रेपि ।

देवांश्च पितॄंश्चावाहयिष्य इत्यनुज्ञाप्यावाहयेत् सौम्यास्ते सन्त्वित्यनुज्ञातः पूर्वं देवानावाहयेत्। अयञ्च प्रश्नो यवहस्तेन यजमानेन कार्य्य इत्याहयमः—

यव हस्तस्ततो देवान् विज्ञाप्या वाहनं प्रति ।

आवाहयेदनुज्ञातो विश्वेदेवा स इत्यृचा ॥

आवाहनञ्च प्रादक्षिण्येन कार्य्यम् ।

अतएवोक्तं भविष्यत्पुराणे ।

आवाहयेद्यवैर्देवानपसव्यं तिलैर्पितॄन् ।

उक्तं हि कूर्मपुराणे—

ततस्त्वावाहयेद्देवान् ब्राह्मणानामनुज्ञया ।

उदङ्मुखो यथा न्यायं विश्वेदेवास इत्यृचा ॥

अत्र ह्युदङ्मुखत्वस्यावाहनभावनया साङ्गया सहसम्बन्धोऽव गम्यते अतः प्रश्नोप्युदङ्मुखे नैव कार्य्यः ।

इत्यावाहनविधि प्रश्नानुज्ञाः ।

## अर्घ्य निरूपणम् ।

विष्णुपुराणे—

विष्टरार्थं कुशान् दत्वा सम्पूर्घ्यार्घ्यं विधानतः ।
कुर्य्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ॥
यवाम्बुना च देवानां दद्यादर्घ्यं विधानवित् ॥

ब्रह्माण्डपुराणे—

सौवर्ण राजताम्भोज मणिपात्राण्यथापि वा ।
अर्घ्यार्थं संस्करोत्येव शुभम्पत्र पुटादि वा ॥

राजतमर्घ्यपात्रं पित्र्यएव कर्मणि प्रयोज्यं दैवेतन्निषेध दर्शनात् ।
मत्स्य पुराणे । रजतमधिकृत्य—

शिवनेत्रोद्भवं यस्मादतस्तत्पितृ वल्लभम् ।
अमङ्गलं तद्यत्नेन देवकार्य्येषु वर्जितम् ॥

शिवनेत्रोद्भवं—रुद्राश्रु सम्भवम् ।

यदश्रु अशीर्य्यत् तद्रजतं हिरण्यमभवदिति तैत्तरीयश्रुतेः । अश्रु प्रभवत्वादेवामङ्गलम् ।

अतएव पित्र्यएव कर्मणि रजतस्य प्राशस्त्य माह वैजवापः ।

राजतानि प्रशस्तानि पित्र्येहैमानि दैविके ।
अपिवा ताम्रपात्राणि दैवे पित्र्येर्घ्यं कर्मणि ॥

अम्भोजं—ताम्रमयं—रसशास्त्रे कमलनाम्नां ताम्रवाचित्व प्रसिद्धेः । यज्ञियं—यज्ञियवृक्षमयं—पलाशाश्वत्थो दुम्बर विकङ्कत काश्मर्यविल्व खदिर शमी प्रभृतयो यज्ञियवृक्षाः ।

तदाह प्रजापतिः—

सौवर्णं राजतं खाड्गं ताम्रं मणिमयं तथा ।
यज्ञियं चमसं वापि अर्घ्यार्थं पूरयेद्बुधः ॥

पाद्ममात्स्ययोः—

विश्वेदेवान्यवैः पुष्पैरभ्यर्च्यासन पूर्वकम् ।
पूरयेत्पात्र युग्मन्तु स्थाप्य दर्भ पवित्रके ॥
शन्नोदेवीत्यपोदद्या वोसीतियवानपि ।

पवित्र निधान माह पारस्करः । प्रचेता अपि—

पवित्रेस्थ इति मंत्रेण पवित्रे कारयेद् बुधः ।
ते निधायार्घ्यपात्रेषु शन्नोदेवीत्यपः क्षिपेत् ॥

अत्र पवित्र प्रातिपदिकं विधिविशेषच्छिन्नायां दर्भशिखायां वर्तते ।

तत्र समंत्रकमाह प्रचेताः—

यवोसीति यवान्कीर्य्य गन्ध पुष्पैः सुपूजितम् ।
यादिव्या इति मंत्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥

चतुर्विंशतिमते—

द्वे द्वे शलाके देवानां पात्रेकृत्वात्वपः क्षिपेत् ॥

कूर्मपुराणे—

द्वे द्वे पवित्रे देवानां पात्रेकृत्वात्वपः क्षिपेत् ॥

अत्र यदि वैश्वदेविके द्वौविप्रौ द्वेचार्घ्यपात्रे तदासमंस्यादितिन्यायात् प्रथम विप्रकरे प्रथम पात्रेणार्घ्यः द्वितीयकरे द्वितीयेनार्घ्योदेयः यदितु चतुःसंख्यका विप्रास्तदा प्रथमार्घ्यस्थितं पवित्रं प्रथम द्विजकरेदत्वा तत्रत्यमर्घ्योदकंस्तोकं तत्करे निक्षिप्य तत्पवित्रमादाय द्वितीय विप्रहस्तेदत्वा तत्पात्रस्थितं शेषमुदकं तत्र निक्षिपेत् । एवं द्वितीयार्घ्यपात्रस्थितं पवित्रं तृतीय विप्रकरेदत्वा तेन पात्रेण चतुर्थं पूर्ववत् कुर्य्यात । एवमष्टसंख्यकेषु वैश्वदेविकेषु समं विभज्य पात्रद्वयस्थितमर्घ्योदकं प्रक्षेप्यम् । यदात्वेकमेवार्घ्यपात्रं अनेके च विप्रास्तदा तत्पात्रस्थितमर्घ्योदकं सर्वेषामपिहस्ते पृथक् पृथक् स्तोकं स्तोकं प्रक्षेप्यम् । तत्र च प्रतिप्रक्षेपं मंत्रावृतिः ।

प्रचेताः—

पादप्रभृतिमूर्द्धान्तं देवनां पुष्पपूजनम् ॥

स्वाहाशब्दश्चात्र प्रयोक्तव्य इत्युक्तं गार्ग्येण—

स्वधेतिचैव मंत्रान्ते पितृणां वचनं यथा।
स्वाहेति चैव देवानां होमकर्मण्युदा हरेत् ॥
होमशब्दोत्र त्याग प्रक्षेपरूपत्वादर्घ्येपि वर्त्तते ॥

नागरखण्डे—

चंदनं गन्ध पुष्पाणि धूपं दत्वा यथाक्रमम्।
सपवित्रेषु हस्तेषु दद्यादर्घ्यं समाहितः ॥

स्वाहान्ते नमः शब्दोपि प्रयोज्यः। नमो देवानामिति श्रुतेः। एतच्च सर्वं वैश्वदेविकमुदङ्मुखेन कार्य्यम्।

भविष्योत्तरे—

उदङ्मुखस्तु देवानां पितृणां दक्षिणामुखः।
आसनार्घ्यादिकं दद्यात् सर्वमेव यथाविधिः ॥

इत्यर्घ्यदानम्।

अस्यानन्तरमाच्छादनदानं कर्त्तव्यम् ॥

अतएवाह शौनकः—

एतस्मिन् काले गन्ध माल्य धूप दीपाच्छादनानां सम्प्रदान मिति। एतस्मिन् काल इत्यर्घ्यदानानन्तर क्रमेण गन्धादीनां आच्छादनान्तानां दानं कर्त्तव्यम्। आच्छादनं—वस्त्रम्।

सौरपुराण—

प्रदद्याद् गन्ध माल्यानि धूप वासांसि शक्तितः।

विष्णु धर्मोत्तरे—

निवेद्य विप्रेषु ततः पाद्यार्घ्यौ प्रयतः क्रमात्।
गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः ॥
अर्च्चयेद् ब्राह्मणान् शक्त्या श्रद्धधानः समाहितः।
आदौ समर्चयेत् विप्रान् वैश्वदेवे निवेशितान् ॥
निवेशितांश्च पित्र्यर्थे ततः पश्चात् समर्चयेत्।
सव्यादंसात्परिभ्रष्टमम्बरं यस्तु धारयेत् ॥

एकवस्त्रं तु तं विद्यात् दैवे पित्र्ये च वर्जयेत् ।
नैक वासान च द्वीपे नान्तराले कदाचन ॥
श्रुति स्मृत्युदितं कर्म कुर्य्यान्नाव्य शुचिः क्वचित् ॥

तथाच क्रतुः—

ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च ।
निराशा पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ॥

शातातपः—

हस्त वात हतं धूपं ये पिवन्ति द्विजोत्तमाः ।
वृथा भवति तच्छ्राद्धं तस्मात्तं परिवर्जयेत् ॥

एतेषां च गन्धादिमंत्राणां दैवे पित्र्ये च साधारणमुक्तं भविष्योत्तरे—

गन्ध द्वारा मित्यनेन गन्धं दद्यात् प्रयत्नतः ।
पुष्पवत्या च पुष्पाणि धूरसीति च धूपकम् ॥
दीपं चेदं ज्योतिरिति दैवे पित्र्ये च कर्मणि ।
युवं वस्त्रा नीत्यनेन दद्याद् वासांसि शक्तितः ॥

अत्र च मंत्रोच्चारणानन्तरं गन्धादि दान वाक्यान्युच्चारणीयानि । ब्रह्मपुराणे दर्शितानि—

अयं वो गन्ध इत्युक्त्वा गन्धं दद्यात् सुशोभनम् ।
इदं वः पुष्प इत्युक्त्वा पुष्पाणि च निवेदयेत् ॥
अयं वो धूप इत्युक्त्वा तदग्रेतु दहेत्ततः ।
अयं वो दीप इत्युक्त्वा दीपं हृद्यं निवेदयेत् ॥
अनङ्ग लग्नं सद्वस्त्रं भवेत् यत्तद् युगं शुभम् ।
इदं वो वस्त्र इत्युक्त्वा त्रितयं वा निवेदयेत् ॥
इदं वो माल्य इत्युक्त्वा दद्यान्माल्यं सुशोभनम् ।

ततः पूजनानन्तरं भविष्यत्पुराणोक्तं प्रार्थना श्लोक मत्यन्तं

विनीतः सन् पठेत्—

मंत्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम ॥

ततः देवताभ्यः पितृभ्यश्चेत्यादिकं त्रिर्जपेत्।
ततश्चाचमनं कुर्यात्। इति गन्धादि दानम्।

## अथ पित्र्यदर्भासन दानादि।

तत्र याज्ञवल्क्यादि वचनानुसाराद्दर्भासनदानाच्छादनान्त वैश्व देविक पदार्थ काण्ड समाप्त्युत्तरकालमारम्भणीयम्। अत्र च वैश्व देविक द्विजानुज्ञाग्रहण पूर्वकत्व मुक्तं पाद्म मत्स्यपुराणयोः—

अभ्यर्च्य ताभ्यामुत्सृष्टः पितृयज्ञं समारभेत्।

तत्र प्रश्नविशेषो ब्रह्मपुराणे—

आवाहनादितः पूर्वं विश्वेदेवान् प्रपूज्य च।
वसुभ्यस्त्वामहं विप्र रुद्रेभ्यस्त्वामहं ततः ॥
सूर्येभ्यस्त्वामहं विप्र भोजयामीतितान् वदेत् ॥

पूर्वं—प्रथमं—आवाहनादितः—आवाहनात् प्रभृत्याच्छादनान्तेन क्रिया-कलापेन विश्वान् देवान् सम्पूज्य पित्रादि ब्राह्मणान् पृच्छेत्। अत्र गोत्र-सम्बन्ध—नामानु कीर्त्तन कर्त्तव्यता माह बृहस्पतिः—

आसने चार्घ्यदाने च पिण्डदानेऽवनेजने।
सम्बन्ध नाम गोत्राणि यथार्हमनु कीर्त्तयेत् ॥

मार्कण्डेयपुराणे—

दर्भास्तु द्विगुणान्दत्वा तेभ्योऽनुज्ञाम वाप्य च।
मंत्र पूर्वं पितॄणां च कुर्य्यादावाहनं बुधः ॥

तथा मैत्रायणीय सूत्रे—

प्रणव मुक्त्वापितॄना वाहयिष्मामीति ब्राह्मणाना मंत्र्यावाहयेत् यथा पिण्डं पितृयज्ञ इति।

ब्रह्मपुराणे—

पितॄना वाहयिष्येहं शेषान् विप्रान् वदेत्ततः ।

आवाहयस्वेत्युक्तस्तैः सावधाना भवन्त्विति ॥

येषु वैश्वदेविकेषु विप्रेष्वावाहनंकृतं तदितरेशेषाः पित्र्य विप्रा इत्यर्थः ।

ब्रह्माण्डपुराणे तु प्राचीना वीतिना तिलहस्तेन यजमानेन पितृ विप्रान् प्रति च प्रश्नः कर्त्तव्य इति ।

अपसव्यं ततः कृत्वा तिलानादाय संयतः ।

पितॄनावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥

कूर्मपुराणे—

अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ।

आवाहनं तदा कुर्य्यादुशन्तस्त्वेत्यृचा बुधः ॥

आवाह्यतदनुज्ञातो जपेदायन्तुनस्ततः ॥

अत्रावाहनं प्रकृत्य गोत्रानुकीर्त्तनमप्याह यमः—

कीर्त्तयेत् पितरंस्त्वादौ तथैव च पितामहम् ।

पितुः पितामहं चैव नाम गोत्रैरतन्द्रितः ॥

अत्रोशन्तस्त्वेति मंत्रान्ते ॐ अमुक गोत्राः अस्मत्पितरोऽमुक शर्म्माणः सपत्नीका वसु रुद्रादित्य स्वरूपा इहागच्छतेत्यादिभिः पित्रादीन् मातामहादींश्चावाहयेत्! तद प्रादक्षिण्येन तिल कुशान् विकरेत् । तदुक्तं ब्रह्माण्डपुराणे मंत्रसहितं ब्रह्मपुराणे च—

अपयन्त्वन्तरे येवा उच्चरं स्तिल वर्हिषः ।

वराहः पितृ विप्राणामपेतो यन्त्वि तीरयन् ॥

असुंयई युरित्यर्चा रक्षणं चापसव्यतः ।

कृत्वा चावाहन चक्रे पितॄणां नाम गोत्रतः ॥

एतत्पितरो मनोजवा आगच्छत इतीरयन् ।

क्षिप्त्वापसव्यश्च तिलान् पितॄन् ध्यायन् समाहितः ॥

अपसव्यं-अप्रादक्षिण्येन तिलान् क्षिप्त्वेत्यत्रपूर्वं गृहीतां स्तिल

कुशानि निवेदितव्यम् तथाच ब्रह्मपुराणे जप्य मंत्रान्तरसहितमावाहन मुक्त्वा तदनन्तरं गृहगर्भे समंत्रकं तिलविकिरणमुक्तम्—

उशन्तस्त्वेति च जपन् पितॄनावाहयेत्ततः।
सोमवन्तो बर्हिषदश्चाग्निष्वात्ताश्चये परे॥
पितरः पुण्य यशशः सर्वेऽप्यायन्तु न स्त्विवति।
ततस्तिलान् गृहे तस्मिन् विकिरेच्चा प्रदक्षिणम्॥
श्रद्धया परयायुक्तो जपन्नपहता इति॥

इत्यावाहनम्।

अथोपवेशन संवेशन पाद्यार्घ्याचमनीयानि।

पिप्पलाथर्वण सूत्रे—

आयात पितर इति पितॄनासीनास इत्युपवेशयेत्।
आयात पितर इत्यनेन पितॄनावाहयेत्।
आसीनास इत्युपवेशयेदित्यन्वयः।

शौनक सूत्रेतु। आयातेति पितॄनावाहयेत्। आच्याजान्वित्युप वेशयेत्। सम्विशन्त्विति संवेशयेत्। अत्रपाद्यमाहविष्णुः—

कुश–तिल विमिश्रेण गन्धोदकेन यास्तिष्ठन्त्य मृतावागिति यन्मे मातेति च पाद्यं निवेद्यैव मेवार्घ्यं दद्यात्। अथार्घ्य दान विधिमाह याज्ञवल्क्यः—

यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्ववत्॥

पूर्ववत्–वैश्वदेविकार्घ्यादिवत्। आदि शब्देन गन्ध पुष्पादि दानं गृह्यते। छान्दोग्य परिशिष्टे कात्यायनोऽपि—

अपसव्यं तदा सिञ्चेत् पितृ पात्रेषु पूर्ववत्।
ततस्तिलां स्तिलो सीति गन्ध पुष्पाणि चैव हि॥

पूर्ववत् शन्नोदेवीरित्यनेनेत्यर्थः।

चतुर्विंशतिमतेतु पित्र्ये त्रिशिखत्वोपदेशः कृतः—

पितृपात्रे विशेषोऽयं तिलोसीति तिलान् क्षिपेत् ।
तिस्रस्तिस्तः शलाकास्तु पितृपात्रेषु पार्वणे ॥
एकोद्दिष्टे शलाकैकं निधायोदक माहरेत् ॥

## अथ पित्र्यर्घ्यपात्रसंस्कारः ।

तत्र च शौनकाश्वलायनावाहतुः ।

तैजसा श्ममय मृण्मयेषु त्रिषुपात्रेष्वेक द्रव्येषु चेति । तैजसं-सुवर्ण-रजत ताम्रादि कांस्यमयं । अश्ममयं—माणिक्य मरकत स्फटिकादि मयं । मृण्मयं—स्वहस्तघटितमृत्तिकामयं नात्र कुलालकृतं श्राद्धे तस्य निषेधात् अतएवाह गोभिलः ।

सौवर्ण राजतोदुम्बर खड्गमणिमयानामन्य तमेषु पत्रपुटेषु वा यानि वा विद्यन्त इति ।

तानि चैतान्यर्घ्यपात्राणि पार्वणे त्रीन्येव गृहीतव्यानि । तथाच मानव मैत्रायणीय सूत्रे । त्रीण्युदपात्राणि कल्पयेत् ।

उदपात्राणि-अर्घ्य साधनोदक धारणार्थानि पात्राणि—तानि पितृ-पितामह-प्रपितामह दैवत्ये श्राद्धे त्रीण्येव कल्पयेत् ।

प्रचेतसाप्युक्तम् । शङ्खोप्याह ।

त्रीण्येव पात्राणि सतिल कुश गन्धोदकानि इति ।

तानि च पात्राणि पितृभ्यो मातामहेभ्यश्च त्रीणि त्रीणि क्रियन्ते । अत्र प्रतिपात्र मन्वासेचनं कार्य्यमित्याह प्रचेताः ।

यज्ञिय वृक्ष चमसेषु पवित्रान्तर्हितेष्वेकै कस्मिन्नप आसिञ्चेदिति । अन्वासेचनानन्तरं तिल प्रक्षेप उक्तः कूर्मपुराणे—

शन्नोदेव्योदकं पात्रे तिलोसीति तिलांस्तथा ।
क्षिप्त्वाचार्घ्यं यथापूर्वं दत्वा हस्तेषु वा पुनः ॥

ब्रह्मपुराणे त्वष्टावर्घ्य द्रव्याण्युक्तानि—

एषतेऽर्घ्य इति प्रोच्य तेभ्यो दद्यादथाष्टधा ।
जलं क्षीरं दधि घृतं तिल तण्डुल सर्षपान् ।।
कुशाग्राणि च पुष्पणि दत्त्वा चामेत्ततः स्वयम् ।।

अष्टधेति क्षीराद्यष्ट जातीय द्रव्यसहित्त जलं एषतेर्घ्यं इति वाक्येन पित्रादिभ्यो दत्वास्वय माचामेदित्यर्थः ।

अत्र सम्बुद्ध्यन्तानां सम्बन्धाभिधानानां प्रयोगस्तु मानव-मैत्रायणीय सूत्रेऽभिहितः । पवित्रं विप्रपाणौ प्रदाय नामगोत्रे समुच्चार्य्य मम पितरे तत्तेर्घ्यं मम पितामह प्रपितामहेति ।

तथाच धर्मः । या दिव्या आप इतिपात्रं पाणिभ्यामुद्धृत्य नाम गोत्रञ्च गृहीत्वा सपवित्रे हस्तेर्घ्यं दद्यादिति ।

## अथ संस्रव विनियोगादि ।

तत्राश्वलायन गृह्ये—

संस्रवान् समवनीय पुत्रकामो मुखमनक्तीति ।
संस्रवाः-अर्घ्यपात्रस्थिता जलशेषाः ।
शतपथेपि-संस्रवो ह्येव खलु परिशिष्टो भवतीति ।

बृद्धशातातपः—

प्रथमे पितृपात्रेतु सर्वान् सम्भृत्त्य संस्रवान् ।
अनक्ति वदनं पश्चात् पुत्रकामो भवेद्यदि ।।

पित्रार्घ्यपात्रेषु यत्प्रथमं पात्रं तत्र सर्वान् संस्रवान् सम्भृत्य-अत्र पितृपात्र सन्निधात् सर्वशब्देन पितृपात्र गता एव संस्रवा गृह्यन्ते नवैश्वदेव पात्रस्था अपीति ।

नागरखण्डे त्वायुष्कामस्य संस्रव जलेन लोचना व सेचन मुक्तम्—

पितृपात्रे समाधाय अर्घ्यपात्राणि कृच्छ्रशः ।
आयुष्कामस्तु तत्तोयं लोचनाभ्यां परिक्षिपेत् ।।

पितृपात्रे-पितुरर्घ्यपात्रे । अर्घ्यपात्राणीतिलक्षयापात्रस्थिता जलशेषा: । समाधाय-निक्षिप्य लोचनाभ्यां परिक्षिपेत् । एतानि च मुखा ञ्जनादीनि काम्यानि कर्माणि यज्ञोपवीतिना यजमानेन कार्याणि । तत्राघ्र्यं दानानन्तरमेव प्रतिपत्तिर्वैजवापगृह्ये । पितृभ्योऽक्षय्यमस्त्विति शेषं दर्भे ष्ववने जपतीति । अर्घ्ये दत्ते यत्पात्रे अवशिष्टं जलं तद् भूमा वा स्तीर्णेषु दर्भेषु निषिञ्चेदित्यर्थ: । तदनन्तरं तत्पात्र मनुपहते क्वचित् प्रदेशे स्थापयेत् ।

अत्रि:—

अपसव्यं ततः कृत्वा पिण्डपात्रे समाहितः ।
क्षिप्त्वा दर्भं पवित्राणि मोचयेत् संस्रवांस्ततः ॥

एतच्च संस्रवधारणं पात्रस्योत्तानतया स्थापने सत्येव नान्यथा-अतोऽवनेजनार्थादुत्तान तयैव पात्रस्य स्थापन मुक्तं वेदितव्यम् । अस्मिंस्तु पक्षे संस्रवाधारी कृतस्य पितृपात्रस्य पितामहपात्रेण न्युब्जेनोत्तानेन नापिधानं कर्त्तव्यम् ।

तथा यमकात्यनौ—

पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत् ।
प्रपितामहन्ततोन्यस्य नोद्धरेत् नच चालयेत् ॥

अत्रिरपि—

तृतीयेनापिधापयेत् । तृतीयाभावे चान्येनेति । पितृपात्रं पितामह पात्रेणपिधाय प्रपितामह पात्रेणपिदध्यात् प्रपितामहपात्राभावे अन्येन येन केनचित् पात्रेण वृद्धप्रपितामहपात्रेण वापिदधीत । प्रपैतामह पात्रा भावस्तु जीवत्प्रपितामहके श्राद्धेऽनुसन्धेयः । एतच्च पात्र निधानं विशेषा ग्रहणादुत्तान स्थापन-न्युब्जीकरणोभयपक्ष साधारणम् तत्र संस्रव सहित न्युब्जीकरण मंत्रश्चोक्तः कूर्मे पुराणे—

संस्रवांश्च ततः सर्वान् पात्रे कुर्य्यात् समाहितः ।
पितृभ्य स्थान सीति न्युब्जंपात्रं निधापयेत् ॥

पितुरर्घ्यपात्रे संस्रव निधान मुक्तं कात्यायन सूत्रे। प्रथमे पात्रे संस्रवान् समवनीय पितृभ्यः स्थान मसीति न्युब्जंपात्रं करोतीति। गोभिलस्तु न्युब्जीकरणानन्तरमेतन्मंत्र जपमाह।

प्रथमे पात्रे संस्रवान् समवनीय पात्रं न्युब्जं कृत्वा पितृभ्यः स्थान मसीति जपेदिति।

संस्रवपात्र न्युब्जीकरणाय प्रदेश विशेषस्तु नागरखण्डे—

अधोमुखञ्च तत्पात्रं विजने स्थापयेत्ततः।

तदिति यस्मिन् पितृपात्रे संस्रवाः गृहीताः।

विजने—श्राद्धीय द्रव्यानपनापनयन-परिवेषणादि कर्तृजन सञ्चरण-दोषरहिते प्रदेशे। एवं विधेपि न यस्मिन् कस्मिंश्चित् किन्तु द्विज पङ्क्ते रुत्तरत एवेत्याह प्रचेताः—

पितृपात्रे निधायाथ न्युब्जमुत्तरतोन्यसेत्।
पितृभ्यः स्थान मसीति निधायाथार्च्चयेद् द्विजान्॥
प्रथमे पितृपात्रे तु सर्वान् सम्भृत्य संस्रवान्।
पितृभ्यः स्थान मित्युक्त्वा कुर्याद् भूमा वधोमुखम्॥

तस्योपरि कुशान्दत्वेति। अत्र गन्धादीनां प्रदानमिति। एतच्च न्युब्जीकृत्यार्चितं पात्रं ब्राह्मण विसर्जन कालात् पूर्वं नोद्धरणीय मित्यापस्तम्ब-यमावाहतुः।

नोद्धरेत्प्रथमंपात्रं पितॄणामर्घ्य पातितम्।
आवृतास्तत्र तिष्ठन्ति यावद्विप्र विसर्जनम्॥
उद्धरेत यदापात्रं विवृतन्तु यदा भवेत्।
अभोज्यन्तद्भवेच्छ्राद्धं दैवैः पितृगणैः सह॥

यम कात्यानाभ्यान्तु तस्य स्पर्शेदोषोभिहितः—

स्पृष्टमुद्धृत मन्यत्र नीतमुद्घाटितन्तथा।
पात्रन्दृष्ट्वा व्रजन्त्याशु पितरः प्रशपन्ति च॥

इति संस्रव विनियोगादि।

## अथ पितॄणां गन्धादि दानम् ।

तत्र तावद्विधि माहतुर्मनु-बृहस्पती—

उपवेश्य तु तान्विप्रा नासनेष्व जुगुप्सितान् ।
गन्धमाल्यैः सुरभिभिरर्च्चयेद्देव पूर्वकम् ॥

अस्यार्थः । उपवेशनानन्तरन्तातुप विष्टान् ब्राह्मणान् गन्धमाल्यै रर्च्चयेत् । गन्धान् कुङ्कुम कर्पूरादीन् माल्यानि कुसुम स्रजः दद्यात् । अत्र सुरभिः शब्द ग्रहणं निर्गन्ध वा दुर्गन्ध पुष्पदान निवृत्यर्थमुक्तम् । इदञ्च देव पूर्वकत्वस्य पुनर्ग्रहणं प्राग् भोजन प्रवृत्तौ तु पान व्यञ्जनादि दानेन नियम इत्येवमर्थ माहुः । अजुगुप्सितानुपविष्टान् विप्रान् निन्दे दित्युक्तं भवति ।

नागरखण्डे—

ततस्तु चंदनादीनि दीपनानि समाददेत् ।

ततः-अर्घ्यदानानन्तरम् ।

आश्वलायन गृह्ये—

एतस्मिन् काले गन्ध माल्य धूप दीपाच्छादनानां प्रदानम् ।

एतस्मिन्-अर्घ्यदानानन्तरम् ।

तथाचोक्तं कालिकापुराणे—

ततोऽभ्यर्च्य सुरान्पूर्वं सान्निध्यं कल्पयवै पितॄन् ।
गन्धाद्यैर्गन्ध माल्यैश्च विधिवत् यत्नतोर्चयेत् ॥

धूपदीपावसानेतु आच्छादनं नियोजयेत् ।

पाद्ममात्स्ययो रपि—

या दिव्येत्यर्घ्यमुत्सृज्य दद्याद् गन्धादि कन्ततः ।
वस्त्रोत्तरञ्चानु पूर्वं दत्वा संस्रव मादितः ॥

वैजवापेन तु वस्त्र दानानन्तरं यज्ञोपवीतदानमुक्तम् ।
गन्ध पुष्पाणि धूपञ्च दीपं वस्त्रोपवीतके ।
तत्र तावद्विश्वेदेव गन्धादि दाने प्रदर्शिता मंत्राः ।
पित्र्य गन्धादिदानेपिवेदितव्याः ।

विशेषस्त्वाह पैठीनसिः—

नाम गोत्रे समुच्चार्य दद्याच्छ्रद्धा समन्वितः ।
पितृनुद्दिश्य विप्रेभ्यो गन्धादीन् देवपूर्वकम् ॥

तदेवं गन्धादिदानं निर्वर्त्य श्राद्धभूमि शोधनादिकं कुर्य्यात् । तथाच कालिकापुराणे—

निर्वर्त्य ब्राह्मणा देशात् क्रियामेवं यथाविधि ।
पुनर्भूमिन्तु संशोध्य पङ्क्तेरन्तरमाचरेत् ॥
भाजनानि ततो दद्यात् हस्तशौचं पुनः क्रमात् ॥

मर्य्यादाकरण हस्तप्रक्षालनयोः पौर्वापर्य्ये विपर्य्यये दोषो मत्स्य-पुराणेऽभिहितः—

अकृत्वा भस्म मर्य्यादां यः कुर्य्यात् पाणि शोधनम् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणांनोपतिष्ठते ॥

मर्य्यादा शब्देनात्र यथा व्याख्यातं पङ्क्तेरन्तर मेवोच्यते ! भस्म ग्रहणं नीवारचूर्णाद्युपलक्षणार्थम् अतएव ब्रह्मपुराणे—

मण्डलानि च कार्य्याणि नैवारैश्चूर्णकैः शुभैः ।
गौर मृत्तिकया वापि प्रणीतेनाथ भस्मना ॥
पाषाणचूर्ण सङ्कीर्ण माहृतञ्च विवर्जयेत् ।
भस्मना वारिणावापि कारयेन्मण्डलं ततः ॥
चतुष्कोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु ।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥

इति गन्धादि दानम् ।

## अथाग्नौकरणम् ।

अथाग्नौकरण होमः किं प्राचीना वीतिना कार्य्यो यज्ञोपवीति नावेति सन्देहे उपवीत विधि वचनानां भूयस्त्वात् भूयसांस्यात्सधर्मत्वमिति न्यायेनोपवीति नैव कार्यो होम इति । अन्येतु यथा शाखं व्यवस्थामेव

प्राचीना वीतोपवीतयोर्मन्यन्ते। तथा च कात्यायनः—

स्वाहा स्वधा नमः सव्यमपसव्यं तथैव च।
आहुतीनांच या संख्या सावागम्या स्व सूत्रतः॥

तथाच स्मृतिः—

साग्निरग्ना वनग्निस्तु द्विजपाणौ तथाप्सुवा।
कुर्य्यादग्नौक्रियां नित्यं लौकिके नेति निश्चितम्॥

मत्स्यपुराणे—

अग्न्याभावेतु विप्रस्य पाणौ वाथ जलेपि वा।
अजकर्णेऽश्वकर्णे वा गोष्ठे वाथ शिवान्तिके॥

आह शङ्खः—

अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे।
अप्सुचैव कुशस्तम्बे अग्निं कात्यायनो ब्रवीत्॥

अथाग्नौकरण होमाङ्ग भूतानि प्रश्नोत्तर द्रव्याणि।

तत्राह याज्ञवल्क्यः—

अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम्।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृ यज्ञवत्॥

महाभारते—

जुहुयाद् व्यञ्जनक्षार वर्जमन्नं ततो नरः।
अनुज्ञातो द्विजैस्तैस्तु कृत्वा ॐ भरतर्षभ॥

शङ्ख लिखितौ—

जुहुयादग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति।

मार्कण्डेयपुराणे—

अग्नये कव्य वाहनाय स्वाहेति प्रथमाहुति।
सोमाय वै पितृमते स्वाहेत्यन्या तथा भवेत्॥

होममुक्त्वाह याज्ञवल्क्यः—

हुत शेषं प्रदद्यात्तु भाजनेषु समाहितः।
यथा लाभोपपन्नेषु रौप्येषु तु विशेषतः॥

अत्र पितृ प्रिय रौप्य वचनात् पैतृक विप्र भाजनेष्विति गम्यते ।

ब्रह्माण्डपुराणे—

अग्नौकरण शेषन्तु न दद्याद्वैश्वदेविके ॥

यमः—

अग्नौकरण शेषन्तु पित्र्येषु प्रतिपादयेत् ।
हुतशेषं कदाचित्तु न दद्याद्वैश्वदेविके ॥

वायुपुराणे—

हुत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत् ।
नहि स्मृताः शेष भाजो विश्वेदेवाः पुराणगैः ॥

वृद्ध वसिष्ठः—

पित्र्य विप्रकरेहुत्वा शेषं पात्रेषु निक्षिपेत् ।
पिण्डेभ्यः शेषयेत् किञ्चिन्नदद्याद्वैश्वदेविके ॥

भविष्योत्तरे:—

भार्य्यया श्राद्धकालेतु प्रशस्तं परिवेषणम् ॥

वायुपुराणे—

परिवेषणं प्रशस्तंस्यात् पितृकर्मणि भार्य्यया ।
पितृदेव मनुष्याणां स्त्री सहायो यतः स्मृता ॥

तथाच नारायणः—

यद्द्रव्यं यत्पवित्रं च यत् पित्र्यं यत्सुखावहम् ।
द्विजातिभ्यः सवर्णाया नार्य्या हस्तेन दीयते ॥

वैषम्यदानेतु दोषमाह यमः। व्यासोपि—

यस्त्वेक पङ्क्त्यां विषमं ददाति
स्नेहात् भयाद्वा यदिवार्थ हेतोः ।
पूर्वं प्रणीतां श्रुतिभिश्च गीतां
तां ब्रह्महत्या मृषयो वदन्ति ॥

अथ पात्रालम्भ जपाङ्गुष्ठ निवेशनानि ।

तत्राह कात्यायनः—

हुत शेषन्दत्वा पात्रमालभ्य जपति पृथवी ते पात्रं द्यौरपिधानं ब्राह्मणस्यमुखेऽमृतं जुहोमि स्वाहेति ।

पैठीनसिः ।

इदं विष्णुर्विचक्रम इत्यनेनाङ्गुष्ठमन्नेचोदके चावधाय ।

अत्रान्न सङ्कल्पस्य वैश्वदेविक पूर्वकत्वं प्रयोग वाक्यैकदेशश्च विष्णुना प्रतिपादितः ।

नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् पित्रे पितामहाय प्रपितामहाय च नाम गोत्रावुदङ्मुखेषु ।

ब्रह्मपुराणे—

तिलपूतं पितृष्वन्न माज्यपूतं मधूक्षितम् ।
मंत्रितं पृथिवीत्येवं मधुवातेत्यृचं जगौवराहः ।।

एतत् मधुसेचनादिक मच्छिद्रवाचन प्रकारश्चाहयमः—

अन्नं मधुमयं कृत्वा मधुवातेति मंत्रितम् ।
अन्नहीनं क्रियाहीनं मंत्रहीनश्चयद्भवेत् ।।
सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत ।।

मार्कण्डेयपुराणे:—

भाजनालम्भनं कृत्वा दत्वाचान्नं यथाविधि ।
यथा सुखं जुषध्वंभो रितिवाच्यमनिष्ठुरम् ।।

अथ विकिरादि । तत्रतावत्क्रमविधी ।

श्राद्धधर्मः—

केषाञ्चित् विकरः पूर्वं तृप्ति प्रश्नस्तथापरः ।
अमृतापिधानात्पूर्वश्च केषाञ्चिद्विकिरोमतः ।।
अन्येषान्तु ततः पश्चाद्विदुषामिति सम्मतम् ।
गायत्र्यादि जपात्पूर्वं केषाञ्चित्तदनन्तरम् ।।

तथाच यमः—

ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्य्यादनुज्ञातस्तु तैर्द्विजैः ॥

विष्णुधर्मोत्तरे—

उदङ्मुखानां विप्राणां पुरतः सोदकन्ततः ।
अन्नन्तु विकरेद्भक्त्या पितृभागस्तु सस्मृतः ॥

उच्छिष्ट सतिलान् दर्भान् दक्षिणाग्रान्निधापयेत् उच्छिष्ट इत्युच्छिष्ट सन्निधौ ।

ब्रह्मपुराणे—

येऽस्मत्कुलेतु पितरो लुप्तपिण्डोदकक्रियाः ।
ये चाप्य कृत चूडास्तु ये च गर्भाद्विनिःसृताः ॥
येषां दाहो न क्रियते अग्निदग्धाश्च ये परे ।
भूमौदत्तेन तृप्यन्तु तेपियान्तु परांगतिम् ॥
ततः प्रक्षाल्य हस्तौ च त्रिराचम्य हरिं स्मरेत् ।
सव्याहृतिं सप्रणवां गायत्रीञ्च पठेत्तथा ॥

शङ्खः—

उच्छिष्ट सन्निधौ कार्य्यं पिण्ड निर्वपणं धैः ॥

याज्ञवल्क्यः—

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्ट सन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ॥

आह देवलः—

उपलिप्ते शुचौदेशे स्थानं कुर्वीत सैकतम् ।
मण्डलं चतुरस्रं वा दक्षिणावनतं महत् ॥

ब्रह्माण्डपुराणे—

सव्योत्तराभ्यां पाणिभ्यां कुर्य्यादुल्लेखनं द्विजः ।
सकृदेव पितृणां स्याद्देवानान्तु त्रिरुच्यते ॥

उल्लेखनानन्तरं पश्चादुल्मुक निधान माह कात्यायनः—

उल्मुकं पुरस्तात्करोति ये रूपाणीति ।

देवलः—

तस्मिन्स्थाने ततो दर्भा नेक मूलान् शिवान् बहून् ।
दक्षिणाग्रानुदक् पादान् सर्वांस्तांस्तृणुयात्समम् ।।

मार्कण्डेयपुराणे—

पितृतीर्थेन तोयञ्च दद्यात्तेभ्यः समाहितः ।

शतपथेपि । अथोद पात्रमादाया वने जपत्यसाव वने निवनेति ।

तथा चोशनाः । तिलोन्मिश्रितेनोदकेनासिच्य दर्भास्तीर्णायां भूमौ पिण्डं निवेदयेदिति ।

वाराहपुराणे—

पिण्डपात्रं समादाय जायायै प्रददौ ततः ।
सातदन्नं द्विधा कृत्वा त्रिधैकैकमथा करोत् ।।

मनुः—

त्रींस्तु तस्माद्ध विंशेषात् पिण्डान् कृत्वा समाहितः ।
औदके नैव विधिना निर्वपेद्दक्षिणामुखः ।।

अत्र त्रीनिति पित्राद्येक वर्गापेक्षया ।

बृहस्पतिः—

सर्वस्मात् प्रकृतादन्नात् पिण्डान्मधु तिलान्वितान् ।
पितृ मातामहादीनां दद्याद् गृह्य विधानतः ।।

वायुपुराणे—

मधु सर्पि स्तिलयुतां स्त्रीन् पिण्डान्निर्वपेद् बुधः ।

परिमाणान्तराण्याहाङ्गिराः—

कपित्थ बिल्वमात्रान्वा पिण्डान्दद्यात् विधानतः ।
कुक्कुटाण्ड प्रमाणान्वा यदि वा मलकैः समान् ।।
बदरेण समान् वापि दद्याच्छ्रद्धा समन्वितः ।।

मरीचिः—

आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे ।
एकोद्दिष्टे विल्वमात्रं पिण्डमेकन्तु निर्वपेत् ।।
तस्मादपिस्थूलतर माशौचे प्रतिवासरम् ।।

अत्रामलक मात्रानेव पार्वणे कुर्वीतेति न व्याख्येयम् । विल्वमात्र मित्यनेन विल्वान्न्यूनमामलकादि परिमाण मेव निवर्त्यते नत्वधिक मपि । तथाच शिष्टाचारानुगृहीतो भवति । तथैवैकोद्दिष्टत्वेपि न तत्र विल्व मात्र मेव किन्तु तस्मादपि स्थूलतरं निर्वपेत् ।

इति पिण्डपरिमाणविषयोविधिः ।

## अथ पिण्ड निर्वपणम् ।

तत्र प्राचीनावीत–सव्य जानु निपातन–दक्षिणामुखत्व–पराचीन पाणित्वादि रूपं–हृदङ्ग सकल पित्र्यकर्म साधारणमपि पिण्ड निर्वापैक सम्बद्धैतत्प्रतिपादक नाना वचन सञ्जिघृक्षयात्र निरूप्यते । तत्र तावत्प्राचीना वीतं कर्त्तव्यम् । दक्षिणतः प्राचीना वीती । इति तैत्तरीय श्रुतेः । प्राचीनावीती लेखां त्रिरुदकेनोपनयेत्–इत्य वनेजनात्प्रभृति प्राचीनावीत विधायकादाश्वलायनसूत्रात् । अत ऊर्ध्वं प्राचीनावीती कर्माणि करोति । इति मार्जनात्प्रभृति प्राचीनावीति विधायकादापस्तम्ब सूत्रात् । अथ प्राचीनावीती भुवमुप लिख्योल्लिख्य–इति कठसूत्रात् । प्राचीनावीत व दुपलेपनात्प्रभृति भूमौ वामजानुनिपातनमपि कर्त्तव्यम् ।

तथाच ब्रह्माण्डपुराण–वायुपुराणयोः—

मधु सर्पि स्तिलयुतां स्त्रीन्पिण्डान्निर्वपेद् बुधः ।
जानुकृत्वा तथा सव्यं भूमौ पितृ परायणः ।।

तत्र तावत्सव्यपाणि संयोजनं शङ्ख लिखिताभ्यामुक्तम् । पिण्डं निदध्यात्सव्येनपाणिना दक्षिणपाणिपुरः सरेणेति । सव्यं दक्षिणेन संयोज्य उत्तान हस्ततातु ब्रह्माण्डपुराणेऽभिहिता—

उत्ताने नतु हस्तेन निर्वपेद्दक्षिणामुखः ।

अङ्गुष्ठस्पर्शनन्तु देवलेनोक्तम् । अपसव्यमपाङ्गुष्ठमिति । तथाच षट्त्रिंशन्मते—

सव्यं जानु निपात्यैव भूमौ पिण्डान्प्रयत्नतः ।
निर्वपेत्पितृतीर्थेन स्वधाकार मुदा हरन् ॥

स्वधा शव्दानन्तरं नमः शव्दोपि प्रयोज्य इत्याह शाट्यायनिः—

असावेतत्त इत्युक्त्वा तदन्ते च स्वधानमः ।

तत्राह कात्यायनः । यथा व निक्तं पिण्डान् ददात्यसावेतत्त इति । यथा व निक्तं-यत्र यत्र येन च क्रमेण यस्य यस्या वनेजनं कृतं तत्र तत्र तेनैव क्रमेण तस्य तस्य पिण्डं दद्यात् । असावित्यस्य स्थाने गोत्र सम्बन्ध नाम्नामभिधानं कर्त्तव्यत्वेन विवक्षितम् । अतएवाह पारस्करः—

अर्घ्यदाने च सङ्कल्पे पिण्डदाने तथा क्षये ।
गोत्र सम्वन्ध नामानि यथावत्प्रतिपादयेत् ॥

सङ्कल्प शव्देनात्र द्विज भोजन त्यागोऽभिधीयते ।

गोत्रनाशे तु काश्यप इति व्याघ्रपात् ।

तथाच शतपथ श्रुतिः—

तस्मादाहुः सर्वाः प्रजाः काश्यप्य इति ।

तदेवं नव दैवत्ये मातृ वर्गस्य मध्ये निवेश उक्तः ।

ब्रह्माण्डपुराणे—

पितृभ्यः प्रथमन्दद्यान्मातृभ्यस्तदनन्तरम् ।
ततो मातामहेभ्यश्चेत्यन्वष्टक्यः क्रमः स्मृतः ॥

तस्यान्यथाकरणे दोषमाहोशनाः—

अन्तर्माता महान् कृत्वा मातॄणां यः प्रयच्छति ।
श्राद्धं वा पिण्डदानं वा पितॄणां नोपतिष्ठते ॥

तथाच देवलः—

पितुः पितामहस्यापि तत्पितुश्च तथावपेत् ।
सामान्यमिति शेषाणां चतुर्थंपिण्डमावपेत् ॥

शेषाणां—प्रपितामहात्परेषां त्रयाणां सामान्य मेतदन्नं स्वधान मस्तेति चतुर्थं वपेत्। स च प्रपितामहात्परेषां नाम गोत्रादि ग्रहणं विनैव देयः। गोत्र सम्बन्ध नामानुकीर्त्तितपितृव्यतिरिक्तानां प्रमीत सर्व सम्बन्धा नामुद्देशेनायं चतुर्थ पिण्डो दीयत इति मंत्रान्तर लिङ्गादव गम्यते। दर्शितश्चासौ मंत्रो लौगाक्षिणा

पितृवंशे मृता येच मातृवंशे तथैव च।
गुरुश्वशुर बन्धूनां ये चान्ये बान्धवा मृताः॥
ये मे कुले लुप्तपिण्डाः पुत्र दार विवर्जिताः।
क्रियालोप गता येच जात्यन्धाः पङ्गवस्तथा॥
विरूपा आमगर्भाश्च ज्ञाता ज्ञाताः कुले मम।
तेभ्यः पिण्डं मयादत्त मक्षय्य मुपतिष्ठताम्॥

अत्र द्विपितृकं कर्त्तारं प्रतिपिण्ड पितृयज्ञसूत्रे विशेष मुपदिशत्यापस्तम्बः—

यदि द्विपितास्यादेकैकस्मिन्पिण्डे द्वौ द्वा वुपलक्षयेदिति। अस्यार्थः योहि क्षेत्रजादि द्विपितृकः स्यात्सतु पिण्डान्निर्वपन्नेकैकस्मि न्पिण्डे द्वौ द्वा वुपलक्षये दुद्दिशेत्। प्रथमे पिण्डे द्वौ पितरौ द्वितीये द्वौ पितामहौ तृतीये द्वौ प्रपितामहाविति।

तत्रावनेजनादि क्रमस्त्वापस्तम्ब गृह्ये पितृवर्गं मातृवर्गं वाश्रित्योक्तम् —

द्वैधं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषूत्तरैरपो दत्वोत्तरैरपो दत्वो त्तरैर्दक्षिणापवर्गान् दत्वेति द्विधाभूतं यथा भवति तथा दक्षिणाग्रान् दर्भानुल्लिखित देशे संस्तीर्य्य तत्र पूर्वभागे पित्रादि वर्गार्थं संस्तरणं पश्चाद्भागे तु मात्रादि वर्गार्थम्।

तथा विशेषं साङ्ख्यायन गृह्ये—

भुक्तवत्सु पिण्डान् दद्यात्पुरस्तादेके पिण्डान्पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्द्धायेति। स्त्रीभ्यश्च पिण्डा इह पश्चिमास्युरिति गृह्य भाष्यार्थ

संग्रहकार वाक्यात् पितृवर्गं पिण्डेभ्यः पश्चिमेन तृणादिकं किञ्चिदन्तर्द्धाय पितृ पितामह प्रपितामह पत्नीभ्यः पिण्डान्दद्यादिति ।

मत्स्यपुराणे—

ततः कृतान्तरे दद्यात्तत्पत्नीभ्यः कुशान् बुधः ।
तद्वत्पिण्डादिकं कुर्य्यादावाहन विसर्जनम् ॥

देवलेन च स्त्रीवर्गे चत्वारः पिण्डा उक्ताः—

अत्र येषां गृह्यकारैरमावास्यादौ मातृश्राद्धं पृथक् विहितन्तैर्द्वादश दैवत्यं श्राद्धं कर्त्तव्यम् । पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमिति वचनात् मातामह श्राद्धेपि कर्त्तव्ये प्राप्ते प्रकृतिवद् विकृतिरिति न्यायात् पृथङ् मातामही वर्गस्यापि श्राद्धं कर्त्तव्यं सम्मतञ्च शिष्टानां पितृश्राद्ध विकृतित्वं मातामह श्राद्धस्य । अतएव मातामह श्राद्धे पितृश्राद्ध धर्मातिदेश आपस्तम्ब गृह्य भाष्यार्थ संग्रहकारेण दर्शितः ।

मातामहानामप्येवं श्राद्धं कुर्य्यात्प्रयत्नत इति ।

अत्र मातामही वर्गस्य मातामहेभ्यः पश्चिमतः सर्वान्ते निवेशः । येषान्तु गृह्यकारैरमावास्यायां मातृश्राद्धं पृथक् नोक्तन्तैरमावास्यादौ पित्राद्युद्देशे क्रियमाणे सपत्नीकाभिधानं कर्त्तव्यम् ।

## अथ हस्तोन्मार्जनम् ।

तच्च पिण्ड निर्वापानन्तरं मैत्रायणीय पिण्ड पितृयज्ञसूत्रे दर्भेषु पिण्डं समंत्रक मुक्तम्—

बर्हिषिलेपं निमार्ष्टिश्चात्र पितरः स्वधा तथा यूयं यथाभागं मादयध्वमित्यत्र पितरो मादयध्वमिति ।

मंत्रान्तर मुपदिशन्नाह विष्णुः—

अत्र पितरो मादयध्वमिति दर्भमूलेषु करावघर्षण मिति ।

व्याघ्रोप्याह—

दर्भमूलेषु निमृजेद्धस्तलेपं समाहित इति ।

इहकस्य पदार्थस्यानन्तरं केषाञ्च दर्भाणां मूलेकांश्च पितॄनुद्दिश्य लेपमार्जनमित्यपेक्षायामाह मनुः—

पुष्य पिण्डान् पितृभ्यश्च प्रयतो विधिपूर्वकम् ।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम् ।।

पुष्य-दर्भेषु पिण्डान्निधाय । प्रयतः प्रयत्न विशेषवान् । अत्रैकाग्र त्वादि मनो धर्मः । विधिपूर्वकमिति । तेषु दर्भेष्विति येषु पिण्ड निर्वापः कृतः । तमिति येन पिण्डदानं कृतम् ।

लेपभागिनामिति लेपभागिनः पितॄनुद्दिश्य । ते च मत्स्यपुराणे दर्शिताः—

लेप भाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्त पौरुषम् ।।

चतुर्थाद्याः-वृद्धप्रपितामह प्रभृतयः । तदेवमयं श्राद्धकर्त्ता वृद्ध प्रपितामहादींस्त्रीनुद्दिश्य तेषामयं भागोस्तु-इत्यभिदधानः प्रथम पिण्डा धारभूत दर्भमूलेषु हस्तं निमृज्यात् । अतश्च यदि हस्तेलेपोस्ति तर्हि तस्य मार्जनं कर्त्तव्यं यदि न किञ्चिदपि हस्ते संश्लिष्ये तथापि हस्तन्निमृज्या देव । ननु च लेपभागिनामिति श्रूयते तत्रासति लेपेन प्राप्नोतीति शंकायां विष्णुनाकर मात्रावघर्षणमुक्तम् !

दर्भमूलेषु करावघर्षणमिति । नह्यत्र श्रूयते हस्तलग्नं निमृज्यात् तस्माल्लेपभागिना मयं भागो स्त्विति ब्रुवन् दर्भमूलेषु करावघर्षणं कुर्य्यादेव ! इति हस्तोन्मार्जनम् ।

## अथाचमनादयः ।

ब्रह्मपुराणे—

ततो दर्भेषु विधिवत् संमार्ज्य च करौ ततः ।
प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत् ।।

तच्च यज्ञोपवीतिना कर्त्तव्यम् ।

तत्र तावत्कात्यायन सूत्रे ।

अत्र पितर इत्युक्तो दङ्मास्त आतमनादा वृत्यामीमदन्तेति जपति ।

उदङ्ङास्ते-उदङ्मुखो भूत्वा। आस्ते—आसीत।

एतच्च सव्या वृदावर्त्तनं केषांचि देव कर्तृणां न सर्वेषा मुक्त मत्र षट्त्रिंशन्मते—

**वामेना वर्त्तनं केचिदुदगन्तं प्रचक्षते।**
**सर्वं गौतम शाण्डिल्यौ शाण्डिल्यायन एव च॥**

वामेन-वाममङ्गं पुरस्कृत्येत्यर्थः। उदगन्तं यावदुदङ्मुखो भवति तावदेवनाधिकम्। केचिदिति गौतमादयस्तु-सर्वं-सर्व प्रकारं सव्येनापसव्येन परावर्त्तनं प्रचक्षते। उदङ्ङास्त इत्यस्य कालावधिमाह-आतमनात्-तमनं ग्लानिः तदवधि। अत्रोदङ्मुखावस्थान मात्रेण तमना सम्भवाच्छ्वास निरोधात्मकं शास्त्रान्तरोपदिष्टं तमन कारणमनुष्ठेय तया सूचितम्। तदाहाश्वलायनः-विष्णुरपि—

यथाशक्ति प्राणनिरोधनं कृत्वेति।

अतएव कर्मप्रदीपे—

**आवृत्य प्राणमायम्य पितॄन् ध्यायन् यथार्हतः।**
**जपंस्तेनैव चावृत्य ततः प्राणान् प्रमोचयेत्॥**

जपन्—अमीमदन्तेति मंत्रम्। तेनैव—वामेनैव मार्गेण। प्राणान्प्रमोचयेत्—उच्छ्वसेदित्यर्थः।

अत्रामीमदन्तेत्यस्यानन्तरं कैश्चित्पिण्डावशिष्टान्नावघ्राण मुक्त्वा प्रत्यवनेजनमुक्तम्।

तथाचाश्वलायन सूत्रे—

चरोः प्राणभक्षं भक्षयेन्नित्यं निनयनमिति। नासिकया वहता प्राणेन भक्षण मवघ्राणन्तद्यथा निष्पद्यते तथा चरोः पिण्डावशिष्टस्य भक्षयेत्। पिण्डावशिष्टमन्न मवजिघ्रेदित्यर्थः। अनन्तरं-नित्यं-नियमेन-निनयनं-उदक निनयनं प्रत्यवनेजनमित्यर्थः। विष्णुनाप्युक्तम्। अमीमदन्तेत्यनुमंत्र्य शेषावघ्राणं कृत्वा शुन्धन्तां पितर इति पूर्ववदुदक निनयन मिति। शेषा वघ्राणन्तु केषाञ्चिन्मतमुक्तं न सर्वेषाम्। पिण्डावघ्राणन्तु पुरस्ताद्दर्शयिष्यते। अत्रामीमदन्तेति जपानन्तरं प्रत्यवनेजनात्प्रभृत्युल्मुक निधानान्तानि पिण्डदानान्याह कात्यायनः।

अमीमदन्तेति जपत्यवनेज्य पूर्व्ववत् नीवीं विस्रंस्य नमो व इत्यञ्जलिङ्करोत्ये तद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णां दशावा वयस्युत्तरे यजमान लोमानि वोर्ज मित्यपो निषिञ्चत्यभिधायाव जिघ्रति यजमान उल्मुकसकृदाच्छिन्नान्यग्नाविति ।

वासकच्छायामन्तरीयदशा संगोपनं नीविः तां विस्रंस्य उन्मुच्य । विस्रंसन विधानादितः पूर्वन्तस्याः साधारणं कर्त्तव्यमिति गम्यते । अञ्जलिः—करसम्पुटः—अञ्जलिमाबध्य पिण्डाभिमुखः पितृभ्यो नमस्कारान् कुर्य्यादित्यर्थः ।

ब्रह्माण्डपुराणे—

सव्योत्तराभ्यां हस्ताभ्यां वदेन्मंत्रमिमं सदा ।
नमो वः पितर इष इति सम्यग तन्द्रितः ॥

सव्योत्तराभ्यां—दक्षिणपाणिमुत्तानं कृत्वा तदुपरिसव्यपाणिना अधोमुखेनाञ्जलिंबद्ध्वेत्यर्थः । नमस्कार संख्या माह—षट् कृत्व इति ।

एतच्चसार्थवादकं शतपथे श्रूयते ।

अथ नीविमुद्धृत्य नमस्करोति ।

पितृ देवत्यावै नीविस्तस्मान्नीविमुद्धृत्य नमस्करोति । यज्ञोवै नमो यज्ञियानेवैतानेतत् करोति षट्कृत्वो नमस्करोति षड्वा ऋतवः ऋतवः पितरस्तस्मात् षट्कृत्वो नमस्करोतीति ।

ब्रह्मपुराणे—

एतद्वः पितरोवासस्त्वित जल्पन् पृथक् पृथक् ।
अमुकामुकगोत्रै तत्तुभ्यं वासः पठेत्ततः ॥

अत्र पिण्डप्रदान दिने सिद्धानां भक्ष्य भोज्यानां मध्ये कस्यचिंदे कस्यापि पिण्डेभ्यो निवेदनमन्तरेण भक्षणे यजमानस्य दोषः शङ्खस्मृति ब्रह्माण्डपुराणयोरुक्तः—

दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् ।
भक्ष्यान पूपानि क्षूंश्च व्यञ्जनान्यशनानि च ॥

यत्किञ्चित्पच्यते गेहे पेयं भोज्यं विगर्हितम् ।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथंचन ॥

तथाच मत्स्यपुराणे—

गन्ध धूपादिकं दद्यात् कृत्वा प्रत्यवनेजनम् ।
दीप प्रज्वालनं तद्वत् कुर्य्यात् पुष्पार्चनं बुधः ॥

इत्याचमनादयः पदार्थाः ।

## अथ सुप्रोक्षितपदार्थाः ।

मानवमैत्रायणीय सूत्रे—

सुप्रोक्षित मस्त्वक्षय्य मस्त्वक्षताः सन्त्विति ।

अत्राह विष्णुः—

ततः सुप्रोक्षितमिति श्राद्धदेशं प्रोक्ष्य दर्भपाणिः सर्वं कुर्य्यात् ।

एतच्च यज्ञोपवीतिनाकार्य्यमित्युक्तं नागरखण्डे—

नमस्कृत्य पितृन् पश्चात् सुप्रोक्षितमतः परम् ।
कृत्वा सव्येन राजेन्द्र याचयित्वा वराशिषः ॥

तथा च ब्रह्मपुराणे—

ततस्त्वभ्युक्ष्यतांभूमिं दत्वापः सुमनोऽक्षतैः ।
सतिलाम्बु पितृष्वादौ दत्वा दैवेषु साक्षतम् ॥

शङ्खधरस्त्वाह—

नह्यत्राम्बु प्रभृतीनां पित्राद्युद्देशेन दानं क्रियते किन्तु हस्ते प्रक्षेप मात्रं अतोऽस्य पित्रर्थत्वाभावात् सव्येनैव कर्त्तव्यतोचितेति ।

अतएवाह वृद्धशातातपः—

ततः पुष्पाणि सव्येन सोदकानि पृथक् पृथक् ।
दर्भपाणिः प्रदद्यात्तु यत वा वाय मानसः ॥
शिवा आपः सन्त्विति उदक दानम् ।
सौमनस्यमस्त्विति पुष्प दानम् ।
अक्षतंचारिष्टं चास्त्विति अक्षत दानम् ।

भविष्योत्तरे—

स्वस्तिवाच्यं ततः कुर्य्यादक्षय्योदकमेव च ।

मत्स्यपुराणे—

ततः स्वधा वाचनिकं विश्वेदेवेषु चोदकम् ।
दत्वाशीः प्रतिगृह्णीयाद् द्विजेभ्यः प्राङ्मुखो बुधः ।

मनु विष्णू—

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः ।
दक्षिणां दिशमाकाङ्क्षन् पितृन् याचेत साग्निकः ।।

अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ।
गोत्रं तथा वर्द्धन्तां नस्तथेत्युक्ते पुनर्द्विजैः ।।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्तति रेवच ।
श्रद्धाचनो माव्यगमत् बहुदेयं च नोऽस्त्विवति ।।
अन्नश्चनो बहुभवेदतिथीं श्चलभेमहि ।।
याचितारश्च नः सन्तु माचया चिष्म कश्चन ।।
एताः सत्याशिषः सन्तु सन्त्वित्युक्तश्चतैः पुनः ।
स्वस्तिवाचनिकं कुर्य्यात् पिण्डानुद्धृत्य भक्तितः ।

यद्यपि पूर्वोक्त मत्स्यपुराणवाक्ये पिण्डोद्धरणं कृत्वा स्वस्ति वाचनं कार्य्यमितिदर्शितं तथापि स्वस्तिवाचनात् पूर्वंपात्रचालनं कर्त्तव्यम् ।

अतएवाह नारायणः—

अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथा गति ।।

याज्ञवल्क्यः—

स्वस्तिवाच्यं ततः कुर्य्यादक्षय्योदक मेव च ।
दत्वा तु दक्षिणां शक्त्या स्वधाकार मुदाहरेत् ।।

यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ।।

ब्रह्मवैवर्ते—

सव्यवद्देवतीर्थेन यवोदकमथो ददेत् ।
विश्वेदेवाश्च यज्ञेऽस्मिन् प्रीयन्तामित्युदा हरेत् ।।

पितृनधिकृत्य मात्स्ये—

वाजे वाजे इति जपन् कुशाग्रेण विसर्जयेत् ।
अपसव्येन कर्त्तव्यं सर्वंश्राद्धं यथाविधि ।।

ततः बृहस्पति प्रोक्तः प्रियवाग्रूपो मंत्रजपश्च कर्त्तव्यः—

अद्यमे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्यमे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ।।
मंत्रहीनं क्रिया हीनं सम्पद्धीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादात् भवतां ममेति ।।

विष्णुधर्मोत्तरे—

पश्चाद्विसर्जयेद्देवान् पूर्वं पैतामहान् द्विजान् ।
मातामहानामप्येवं सहदेवैः क्रमः स्मृतः ।।

तथा च ऋष्य श्रृङ्गः—

दक्षिणं पातयेज्जानु देवान्परिचरन्सदा ।
पातयेदितरज्जानु पितॄन्परिचरन्नथ ।।

प्रचेताअपि—

स्वस्तिवाच्यं ततः कृत्वा पितृ पूर्वं विसर्जनम् ।
दरिद्रोपि यथा शक्त्या दद्याद्विप्रेषु दक्षिणाम् ।।

तथा च शातातपः—

ब्राह्मणान् भोजयित्वातु शक्त्या दद्याच्च दक्षिणाम् ।
प्रतिगृह्याशिषन्तेषां कृत्वा विप्रान् प्रदक्षिणम् ।।

तथा च वसिष्ठः—

श्राद्धावसाने कर्त्तव्या द्विजैरन्न गुणस्तुतिः ।

अत्र गुणस्तुतिः मधुरादि गुणानां पृथक् पृथक् न कर्त्तव्या किन्तु शोभनं हविरित्येव मेव ।

तथा च स्मृतिः—

हविर्गुणा न वक्तव्या वक्तव्यं शोभनं हविरिति ।

ब्रह्मपुराणे—

शिष्टमन्नं च पप्रच्छ तैरिष्टैः सहचोदितः ।
विसृजेद् भक्ति संयुक्तः सीमान्तश्चाप्यनुव्रजेत् ॥
निवर्त्तेताभ्यनुज्ञातस्तैर्विप्रैः स्वगृहं विशेत् ॥

सीमान्तं—गृह सीमान्तं नतु ग्राम सीमान्तम् ।

देवलः—

निर्वर्त्य पितृमेधन्तु दीपं प्रच्छाद्य पाणिना ।
आचम्य पाणि प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत् ॥

## अथ पिण्ड प्रतिपत्तयः ।

तत्र काल विशेष विशिष्टं प्रतिपत्तिद्वयमाहतुः—शङ्ख—लिखितौ—

एवं वरान्याचयित्वा नमस्कृत्य पिण्डानग्नौ वाप्सुवा क्षिपेदिति । नमस्कृत्य—ब्राह्मणान् । अयञ्च—कर्म समाप्त्यात्मकः क्षमापनरूपो नमस्कारो ज्ञेयः ।

विष्णुधर्मोत्तरेतु प्रतिपत्ति चतुष्टयमुक्तम्—

पिण्डांश्च गोज विप्रेभ्यो दद्यादग्नावथ क्षिपेदिति ।

देवलस्तु प्रतिपत्तिपञ्चक माह—

ततः कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोग्नि रजो गौर्वा भक्षयेदप्सुवाक्षिपेत् ॥

याज्ञवल्क्योप्याह—

पिण्डास्तु गोज विप्रेभ्यो दद्यादग्नौ जलेपिवा ।
प्रक्षिपेद्दक्षिणामिच्छन् दिशं पितृपरायणः ।।
पृष्ठतश्च ततः कृत्वा नैवेक्षेद्वर्ध्यचाननम् ।।

गवादिषु दत्तेषु पिण्डेषु ततस्तान् पृष्ठतः कृत्वा मुखं परावृत्य नावेक्षेत ।

यमेनत्वैकैकस्य पिण्डस्य पृथक् पृथक् प्रतिपत्तिरुक्ता—

यत्पिण्डंप्लावयत्यप्सु चन्द्रंप्रीणाति तेनसः ।
शशी प्रीणयते देवान् पितृंश्चैव महायशाः ।।
यत्तथा मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता ।
पुत्रकामां सुपुत्रान्तां कुर्वन्ति प्रपितामहाः ।।
यदेव प्रथमं पिण्डं जुहोत्यग्नौ द्विजोत्तमः ।
शाश्वतान् प्राप्यते लोकांस्तुष्टैः सह पितामहैः ।।

विष्णुधर्मोत्तरे—

मध्यमं पुत्र कामा वा पत्नी पिण्डं हि भक्षयेत् ।

देवलः —

तेषां वा मध्यमं पिण्डं पुत्रकामा हि भक्षयेत् ।
पितृ प्रसादात्पुत्रं सा लभते हि महागुणम् ।।

मंत्रश्च पाद्ममात्स्ययोः प्रतीकेन विनियुक्तः—

पत्नीं तु मध्यमं पिण्डमाशयेद्विनयान्विताम् ।
आधत्त पितरो गर्भं मंत्रः सन्तान वर्द्धनः ।।

भक्षण योग्यता पादकं पत्नी सम्बन्धि विशेषान्तर माहतुः शङ्ख लिखितौ ।

पत्नी वा मध्यमं पिण्डमश्नीयादार्त्तवान्विता आर्त्तवं–रजः तन्निमित्तं चतुर्थेऽहनिस्नानं कृतवती ।

अस्मिंश्च पिण्ड भक्षणे विशेष माह हारीतः—

या पत्नी पुत्र कामास्यान्मध्यमं पिण्डमश्नुयात् ।
प्राजापत्येन विधिना सतस्याः पुत्रदः स्मृतः ।।

प्रजापति दृष्टो विधिः प्राजापत्यः । स च मंत्र विशेषेण भक्षण मित्येवं रूपः ।

अमुष्य मंत्रं सम्पूर्ण माहाश्वलायनः—

आधत्त पितरो गर्भं कुमारं पुष्करस्रजं । यथा यमरया असदिति ।

छन्दोगानां मंत्रे पाठान्तरम् । आधत्त पितरो गर्भं कुमारं पुष्करस्रजं । यथेह पुरुषः स्यादिति । आपस्तम्बस्तु भक्षणाय पत्नीकरे पिण्डार्पणे मंत्रं प्राशन मंत्रे च पाठान्तर माह । अपांस्त्वोषधीनां रसम्प्राशयामि भूत कृतं गर्भं धत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छत्याधत्त पितरोगर्भं कुमारं पुष्करस्रजं । यथेह पुरुषोऽसदितितं पत्नी प्राश्नातीति ।

वायु-ब्रह्माण्डपुराणयोः—

पिण्डमग्नौ सदा दद्याद् भोगार्थी सततं नरः ।
पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मंत्र पूर्वकम् ।।
उत्तमाङ्गतिमन्विच्छन् गोभ्यो नित्यं प्रयच्छति ।
आज्ञां प्रजां यशः कीर्त्ति मप्सुपिण्डं निधापयेत् ।।
प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रयच्छति ।
सौकुमार्य्यमथान्विच्छन् कुकुटेभ्यः प्रयच्छति ।।
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ।
पितृणां स्थानमाकाशं दक्षिणादिक् तथैव च ।।

इति पिण्ड प्रतिपत्तयः ।

## अथोच्छिष्टोद्वासनम् ।

तत्र भोजन देश संशोधनार्थं तदुद्वासनं गृहजन बाल बान्धवादि भोजनार्थमुच्छिष्ट स्थलादि प्रक्षालनञ्चार्थ प्राप्तं न शास्त्रे प्रतिपाद्यते । तत्सम्बन्धी तु काल विशेष उच्यते स च सूर्य्यास्त मयात् परतो मुख्यः पूर्वतस्तु जघन्यः ।

कूर्मपुराणे—

नोद्वासयेत्तदुच्छिष्टं यावन्नास्त मितो रविः ।।

एतावत् कालपर्यन्तं अनुद्वासनं प्रयोजनसहित माह वसिष्ठः—

श्राद्धेनो द्वासनीयानि उच्छिष्टान्यादिन क्षयात् ।
श्चोतन्ते वैसुधा धारास्ताः पिवन्त्य कृतोदकाः ॥

यावदुच्छिष्टानि नोद्वास्यन्ते तावत्तेभ्यः सुधाधाराः—अमृतस्य धाराः श्चोतन्ते निःसरन्ति। ताः येषां प्रमीतानां उदकदानं निषिद्धम निषिद्धमपि वा येषां कैश्चिन्न कृतन्ते प्रेतादियोनौ वर्त्तमानाः सन्तः पिवन्ति।

ब्रह्माण्डपुराणे—

उच्छिष्टं न प्रमृज्यात्तु यावन्नास्त मितो रविः ।
क्षीर धारास्ततोयान्त्य क्षय्याः सञ्चर भागिनः ॥

सञ्चरः—मागः। एतच्चा शुचि प्रदेश लक्षणम्। ततश्चा शुचि प्रदेशं ये भजन्ते भूत प्रेत पिशाचादि योनिगताः श्राद्धकर्तृ सपिण्ड समानोदका इत्यर्थः। मनुरपि श्राद्धोच्छिष्टभागिनः प्रतिपादयति। अतएवाह वसिष्ठः—

प्राक् संस्कारात् प्रमीतानां सम्प्रेष्याणामिति स्थितिः ।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥

भागधेयं-भजनीयांशः। उच्छिष्टं नाम—भुञ्जानेषु यत्पात्र कर मुखेषु संश्लिष्यते भूमौ च पपात। यत्तु सुतृप्तत्वेन कारणान्तरेण वा भुह्यमानादन्नराशेर्बुद्धिपूर्वक मवशिष्यते तदुच्छेषणं। तदेतदुभयं सम्प्रेष्याणां दासानां भागधेयमिति श्रुति रित्येतन्मनुः प्राह।

उच्छेषणमपि न पात्र स्थितं तेषां भागधेयं किन्तु भूमौ निहितम्। अतस्तद् ब्राह्मणैर्बुद्धिपूर्वकं भूमौ निधेयमिति गम्यते। तच्च प्रेतादि योनिगतं दासादि वर्गमुद्दिश्य यजमानेन त्याज्यम्।

तदे तदाह वसिष्ठः—

उच्छेषणं भूमिगतं विकिरं लेप मोदकम् ।
अनुप्रेतेषु विसृजेद प्रजानामना युषाम् ॥

मनु विष्णुः—

असंस्कृत प्रमीतानां त्यागिनां कुल योषिताम् ।
उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्चयः ॥

तथाच ब्रह्माण्डपुराणे—

शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
यो दद्यात् रागतो मोहान्न तद्गच्छति वै पितॄन् ॥

अनेन शूद्र निषेधेन भोक्तृ द्विजोच्छिष्ट भोजनयोग्याय सुत शिष्य भार्य्यादेस्त्रैवर्णिकाय तदुच्छिष्ट दापनमनुगमनं भवति ।

त्रैवर्णिकायाप्यनुपनीताय न दातव्यमिति । तत्र द्विज भुक्तावशिष्टस्य का गतिस्तदाह जातूकर्ण्यः—

द्विजभुक्तावशिष्टन्तु सर्वमेकत्र संहरेत् ।
शुचिभूमौ प्रयत्नेन निखत्याच्छादयेद्बुधः ॥

इत्युच्छिष्टोद्वासनं ।

## अथ शेष भोजनम् ।

मनुः—

प्रक्षाल्य हस्ता वाचम्य ज्ञाति प्रायं प्रकल्पयेत् ।
ज्ञातिभ्यः सत्कृतं दत्वा बान्धवानपि पूजयेत् ॥

ज्ञातयः पितृपक्षीयाः सपिण्डास्तान् श्राद्धावशिष्टान्नेन भोजयेत् । तेभ्यः सत्कारपूर्वकं तदन्नं दत्वा बान्धवान् मातृ-श्वशुर पक्षीयान् पूजयेदित्यर्थः । अत्र यदि शेषमन्नं किं क्रियतामिति वेदितमन्नं ब्राह्मणै रस्मभ्यन्दीयतामित्येव मुक्त्वा स्वयं स्वीकृतं तदा पाकान्तरेण ज्ञाति बान्धवादयो भोजनीयाः । यदि त्विष्टैः सहभुज्यतामिति ते ब्रूयुस्तदा तच्छेषेणैव ज्ञात्यादयो भोजनीयाः ।

देवलस्मृति कूर्मपुराणयोः—

बान्धवेषु च तृप्तेषु स्वान् भृत्यान् भोजयेत्ततः ।

आदित्यपुराण ब्रह्मपुराणयोः—

भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि ।
दारिद्रोपहतो दीनश्छिन्नाङ्गश्चाधिकाङ्गुलिः ॥
वृथाजाता विरक्ताश्च व्याधिना च प्रपीडिताः ।
एते भोजन मर्हन्ति भोक्तुः सर्वत्र सर्वदा ॥
बन्दि मागध सूताश्च तौर्यत्रिक विदस्तथा ।
अलब्धलाभाः श्राद्धेषु नाशयन्ति महद्यशः ॥
तस्मात्तेपि विभक्तव्याः सकलं सं त्रिभज्य च ॥

वृथाजाताः–षण्डान्ध पङ्ग्वादयः । तौर्यत्रिकं नृत्य गीत वाद्यानि । एवं ज्ञात्यादीन् भोजयित्वा स्वयमपि भुञ्जीत ।

अतएवाह शातातपः—

शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम् ।
इष्टैः सार्द्धन्तु विधिवद् बुद्धिमान् सुसमाहितः ॥

इष्टैः सार्द्धमित्यनेन स्वपङ्क्ति भोजिभिः सहैकपङ्क्त्या वित्युच्यते । विधिवदित्यनेना पोशानादीति कर्त्तव्यता विशिष्टता पात्रधारण मौनादि नित्य भोजन धर्मयुक्तता च प्रतिपादिता बुद्धिमान् भोजनविधिज्ञः । समाहितः पाण्यादि चापलरहितः । तत्र मौनयुक्तता भविष्योत्तरे दर्शिता—

मित्र वन्धु जनैः सार्द्धं शेषम्भुञ्जीत वाग्यतः ।

कूर्मपुराणे—

पश्चात्स्वयञ्च पत्नीभिः शेषमन्नं समाचरेत् ।

पश्चात्–ज्ञातिभृत्य भोजनानन्तरम् । अत्र पक्षान्तरमपि कात्यायनेन दर्शितम् । अतो गृहपतिं भोजयित्वा पत्न्यो भुञ्जीरन् पङ्क्तौवा ।

आह बृहस्पतिः—

एवं देवान् पितृंश्चैव तर्पयित्वा द्विजोत्तमः ।
पुत्र मित्रादि सहितो गृहस्थो भोक्तु मर्हति ॥
तैरनुज्ञातो शेषमिष्टेभ्यो दद्यात् स्वयञ्चभुञ्जीत ।

उशना—

तैः श्राद्धभोक्तभिरनुज्ञातरिष्टैः सहभुज्यतामित्येवम्।

पद्मपुराणे—

इष्टैः सह ततः शान्तो भुञ्जीत पितृ सेवितम्।

पितृब्राह्मणैर्यद्यदन्नं भुक्तं तस्य तस्य शेषं भुञ्जीत। अतश्च यत्प्रमादेन श्राद्धभोक्तृभ्यो न दत्तं तन्न भोक्तव्यमेवेति गम्यते।

पितृ निषेवितं च सर्वमपिस्तोकंस्तोकं भोक्तव्यम्।

तथा च ब्रह्मवैवर्त्ते—

पितृ द्विजेभ्यः सर्वेभ्योयद्यदत्र निवेदितम्।
अश्नन्नेवहि तत्सर्वं पितृन् प्रीणाति मानवः॥

एतच्च भोजनं सतिसामर्थ्ये तृप्तिपर्य्यन्तं कर्त्तव्यं। तदभावेतु पितृ निषेवितेभ्योऽन्नेभ्यः किञ्चित् किञ्चिदादायैक ग्रास परिमाणमपि समुदायं सम्पाद्य भोजनं कर्त्तव्यम्। अतएव श्राद्धदिने उपवास निषेधमाह व्यासः—

आदित्येऽहनि संक्रान्ता वसितैकादशी ग्रहे।
व्यतीपाते कृते श्राद्धे पुत्रीनोपवसेद् गृही॥

देवलस्तूपवासे दोषमप्याह—

श्राद्धे दत्वातु यो विप्रो न भुङ्क्तेऽथ कदाचन।
देवा हविर्नगृह्णन्ति कव्यानि पितरस्तथा॥

उपवासदिने श्राद्धकर्त्ता पितृनिषेवितं सर्वमवघ्रातव्य मेवेत्य यमपिपक्षो ब्रह्मवैवर्त्ते विचारपूर्वकं प्रतिपादितः—

व्रतभङ्गो महत्पापं भुक्त शेषस्य सेवया।
तत्रवै यत्प्रकर्त्तव्यं तच्छृणुष्व मयेरितम्॥
सर्वमन्नं समुद्धृत्य दक्षिणेन करेण तु।
अवघ्राणन्ततः कुर्य्यात् व्रतभङ्गोन्यथा भवेत्।
अकृते तुमुनिश्रेष्ठ ह्यवघ्राणे च नारद॥

श्राद्धलोपः कृतस्तेन मातृहा पितृहा भवेत् ॥
एवं ज्ञात्वातु विद्वद्भिरुपायश्चिन्तितो द्विजैः ॥

तत्र भोजनकालमाह जातूकर्ण्यः—

अहन्येवतु भोक्तव्यं कृते श्राद्धे द्वि जन्मभिः ।
अन्यथा ह्या सुरं श्राद्धं परपाके च सेवितम् ॥

नागरखण्डे—

वलिश्च निक्षिपेत्तस्मात् भोजनञ्च समाचरेत् ।
मौनेन दृश्यते सूर्य्यो यावत्तावन्नराधिप ॥
यश्चैवास्त मये सूर्य्ये भुङ्क्ते च श्राद्धकृन्नरः ।
व्यर्थतां याति तच्छ्राद्धं तस्माद्रात्रौ न भोजयेत् ॥

इति शेष भोजनम् ।

इतिं मुख्य कल्पिकः पार्वणश्राद्धप्रयोगः ।

---

अथेदानीं कृष्णपक्ष एवका सुचित्तिथिषु श्राद्धप्रयोग विशेष उच्यते ।

तत्र तावत्पञ्चमी श्राद्धं बौधायन सूत्रे—

पुत्रार्थं पञ्चमी श्राद्धं करिष्ये तदर्थे पुण्याहं वाचयिष्ये इति सङ्कल्प्य पुण्याहं वाचयित्वा पुण्याह देवताग्निः प्रीयतामित्युक्त्वा पुण्याहं वाचयेत् । एतच्च मार्गशीर्षं मासमारभ्य कुर्य्यात् । विच्छिन्नाग्नि सन्धानं कृत्वा अग्निमुखमारभ्य प्रणीतान्तं कृत्वा दक्षिणेनाग्निं स्वधापात्रं स्थापयेत् । आमागन्तु पितरो देवयानात् तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्तः स्वध एहि पितॄनिमाल्लोकान् प्रीणया हि नः स्वधा नमः । मधु वाता ऋतायते इति तिसृभिः । सोमस्य त्विषिरसि निरस्तं न मुच्येः शिरः । शन्नो देवी रभिष्टय इत्येतैः स्वधां मिश्रीकृत्य गन्ध पुष्पाक्ततैः पितृभ्यो नमः । पितामहेभ्यो नमः । प्रपितामहेभ्यो नम इत्यर्चयित्वा दर्भैः प्रच्छादयेत् । भोजनस्थाने अपहता असुरा रक्षांसि पिशाचा पितृषदः येक्षयन्ति पृथिवी मनु अन्यत्रेतो गच्छन्तु यत्रैषां गतं मन इत्यद्भिरेवोक्षति उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः असुंय ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु पितना वाहयति आयात

पितरः सोम्याः गम्भीरैः पथिभिः पूर्व्वैः प्रजामस्मभ्यं ददतेरयिञ्च दीर्घायुत्वञ्च शतं शारदञ्चेति द्वौ देवौ कृत्वा विश्वेभ्यो देवेभ्यः क्षणं कर्त्तव्य इति कृत्वा वस्त्रालङ्कार भोजनन्दत्वा गन्ध पुष्प धूप दीपांश्च पित्रर्थे त्रयाणां ब्राह्मणानां पदप्रक्षालनं कृत्वा पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा नम इति स्वधान्दत्वा वस्त्र भोजन गन्ध पुष्प धूपादिभिरर्चयित्वा पितृ ननुज्ञाप्याग्नौ करिष्यामीति सङ्कल्प्य आज्य संस्कारं कृत्वास्रुक् सम्मार्जनं विधाय परिधीन् स्थापयित्वा इध्यानभ्यज्येध्मं निधाय परिषेचनं कृत्वा धारा वा धारयति युक्तोऽवहवतस्त आशाः आनो भद्राः विरूपाक्षमा विरूपाक्षमहं यातिरश्चीसंराधन्यै प्रसाधन्यै व्याहृत यश्चेति हुत्वा प्राचीनावीतीयाः प्राचीरन्तर्दधे ऋतुभिर्यन्मे माता यद्वः क्रव्यादिति पञ्चतृचाहुतीर्हुत्वा चरुं त्रिधा कृत्वा सोमाय पितृमते शुष्मिणे जुहुमो हविर्वाजिनीदञ्जुषस्वनः स्वाहा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति एकेन भागेन जुहोति द्वितीये भागेऽवदाय अङ्गिरस्वन्त मूतये यमं पितृमन्तमाहुः वैवस्वतेदमद्धिनः स्वाहा हव्यं देवेभ्यः स्वधा नमः स्वाहेति तृतीये भागेऽवदाय अग्नये कव्यवाहन पितॄन्यक्षि ऋता वृधः प्रदेवेभ्यो वह हव्यं पितृभ्यश्च स्वाहा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति त्रयं हुत्वा एतैरेव मंत्रैस्त्रिभिर पूपाहुतित्रयं कुर्य्यात्। पितृ भोजनार्थं पक्केऽन्ने तिलान्मिश्रयित्वा तर्पण मंत्रैर्विंशत्याहुतीः कृत्वा अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेत्यग्नौ दक्षिण पूर्वभागे होमं कृत्वा शेषमन्नं चरु शेषं च पितृत्वेन क्लृप्तान् ब्राह्मणान् भोजयेत्। भोजनारम्भे अन्नं स्पृष्ट्वा जपेत् पृथिवी समन्तस्य तेऽग्नि रुपसृष्टा ऋचस्ते महिमा गुप्तस्या प्रमादाय पृथिवी ते पात्रं पितामहानामन्तरिक्षं समन्तस्य ते पुरुष श्रोत्रा यजूंषि महिमा दत्तस्या प्रमादाय पृथिवी ते पात्रं पितामह पात्रं स्पृष्ट्वा द्यौः समन्तस्यते आदित्योऽनुख्याता सामानिते महिमा दत्तस्या प्रमादाय पृथिवी ते पात्रं ॐ भूर्भुवः स्वः इति अन्न मङ्गुष्ठेन स्पर्शयित्वा पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपिता-महेभ्यः स्वधा नम इति दद्याद मृतोपस्तरणमसि प्राणाय स्वाहा पानाय स्वाहा व्यानाय स्वाहोदानाय स्वाहा समानाय स्वाहेति पञ्चाहुतीर्यजमानो

जपति ब्रह्मणि चात्मा मृतत्वाय सर्वैः कामैस्तर्पयतेत्युक्त्वा अमृतापिधान मसि भोजनान्ते उदकमन्नञ्च गृहीत्वा भूमौ विकरेत्। ये अग्निदग्धा ये जीवा ये त्वदग्धाः कुले मम। भूमौदत्तेन तृप्यन्तां तृप्तायान्तु परांगतिम्। इति तिलोदकं गृहीत्वा तृप्यध्वमिति तृप्तेभ्यः स्वधांदत्वा भुक्ति दक्षिणा मपि ब्राह्मणान्प्रदक्षिणी कृत्य विसर्जयेत्। दक्षिणेनाग्नि चतुर्विंशति पिण्डान् पितृभ्यः स्वधा नम इत्यारभ्य सर्वाभ्यः स्वधा नम इति दद्यात्। चरु शेषेण तिस्र आहुतीः कुर्य्यात्। यन्मे माता यन्मे पितामही यन्मे प्रपितामहींति जपादि प्रतिपद्यते परिषेचनान्तं कृत्वा सम्वत्सरादर्वाक् पुत्रंलभत्ते सत्यमित्याह भगवान् बौधायनः।

## अथ भाद्रपदा परपक्षश्राद्ध प्रयोगः।

तत यदि तावत्पाक ब्राह्मण शरीर सामर्थ्यादि सर्वोपपत्तिर्भवति तदा साग्न्यनग्नि ब्रह्मचारि प्रभृतयः सर्वे प्रतिपत् प्रभृति प्रतिदिनं चतुर्दशी वर्जममावास्या पर्यन्तं सर्वेषां कुर्युः। चतुर्दश्यान्तु शस्त्रादि हतस्यैव। यदा पुनः पाकाद्यनुपपत्तिस्तदा एकस्मिन्नपिदिने सर्वेषामवश्यं कुर्य्युः। शाकेनाप्यपरपक्षं नातिक्रामेदिति वचनात्। भाद्रपदा परपक्षाख्य मुख्य काला सम्भवे दीपोत्सव पञ्चदश्यां कर्त्तव्यम्। एतच्च सर्वेषामेकमेव श्राद्धं स्यादतः नवदैवत्यं कर्त्तव्यम्।

अतएवाह धर्मः—

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासुच।
नव दैवत्य मत्रस्याच्छेषं षाट् पौरुषं विदुः॥

शेषं-षोडश श्राद्धादि व्यतिरिक्तं श्राद्धम्। नव देवत्यता चात्रैवं एकः पितृवर्गः। द्वितीयो मातृवर्गः। तृतीयो मातामह वर्गः। मातामह वर्गे च स्त्रीणां सहैवोद्देशो न पृथक्।

तथाच कर्मप्रदीपः—

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते।
स्वभर्तृ पिण्डमात्रेभ्यस्तृप्तितासां प्रकीर्त्तिता॥

छागलेय:—

क्षयाहे केवलाः कार्य्या वृद्धा वादौ प्रकीर्त्तिताः ।
सर्वत्रै वहि मध्यस्था नान्त्याः कार्य्यास्तु मातरः ।।

सर्वत्र महालयेऽन्वष्टका–गयाश्राद्धे च मध्य एव निवेशः ।

ब्रह्माण्डपुराणे—

पितृभ्यः प्रथमं दद्यात् मातृभ्यस्तदनन्तरम् ।
ततो मातामहेभ्यश्चेत्यन्वष्टक्ये क्रमः स्मृतः ।।

चतुर्विंशति मते—

क्षयाहं वर्जयित्वातु स्त्रीणां नास्ति पृथग्विधिः ।
केचिदिच्छन्ति नारीणां पृथक् श्राद्धं द्विजोत्तमाः ।।
आचार्य गुरु शिष्येभ्यः सखि ज्ञातिभ्य एव च ।
सर्वेभ्यश्च पितृभ्यश्च तत्पत्नीभ्यस्तथैव च ।।
पिण्डानेभ्यः सदा दद्यात् पृथक् भाद्रपदे द्विजः ।।

अत्र पार्वण एकोद्दिष्ट व्यवस्थामाह जातूकर्ण्यः—

सपिण्डीकरणादूर्द्धं पित्रोरेव हि पार्वणम् ।
पितृव्य भ्रातृ मातृणामेकोद्दिष्टं सदैव हि ।।

अत्र पार्वणैकोद्दिष्टयोः पौर्वापर्य्य नियममाह मरीचिः—

यद्येकत्रभवेयातामेकोद्दिष्टञ्च पार्वणम् ।
पार्वणञ्चाभि निर्वर्त्यचैकोद्दिष्टं समापयेत् ।।

अत्र तंत्रेणैव पाकः कर्त्तव्यः ।

तथाचात्रिः—

बहुनां वाथवा द्वाभ्यां श्राद्धं चेत् स्यात्समेऽहनि ।
तंत्रेण श्रपणं कृत्वा पृथक् श्राद्धानि कारयेत् ।।

पुलस्त्यः—

महालये गयाश्राद्धे गतासूनां क्षयेऽहनि ।
तंत्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक् पृथक् ।।

एतच्च भाद्रपद कृष्णपक्ष प्रतिपत् प्रभृतिषु चतुर्दशी वर्जममावास्या पर्यन्ता सु तिथिषु प्रत्यहमशक्तौ तन्मध्य एव यथासम्भं नव दैवत्यं पार्वण विधानेन पितृव्यादीनामपुत्राणामन्येषां चैकोद्दिष्ट विधानेन तंत्रेण पाकं कृत्वा पृथक् पृथगपरपक्ष श्राद्धं कर्त्तव्यमिति स्थितम् ।

अत्रा परपक्ष श्राद्धानुकल्प उक्तो ब्रह्मपुराणे—

पयो मूल फलैः शाकैः कृष्णपक्षे च सर्वदा ।
सर्वाधीनः प्रवासी वा निर्द्धनो वापि मानवः ।
मनसा भाव शुद्धेन श्राद्धं दद्यात्तिलोदकम् ।।

इति भाद्रपदापरपक्षश्राद्धप्रयोगः ।

## अथ दौहित्र प्रतिपच्छ्राद्ध प्रयोगः ।

तच्चापरपक्षामावास्योत्तर प्रतिपद्येव कर्त्तव्यम् ।

ननु-दर्शश्राद्धं गयाश्राद्धं श्राद्धाश्चापरपक्षिकम् ।
न जीवत्पितृकः कुर्य्यात् तिलैस्तर्पणमेवच ।।

इति जीवत् पितृकस्यापरपक्ष श्राद्ध निषेधात् कथमितिचेत्—शिष्ट समाचारादितिचेत् इति ब्रूमः । यद्य परपक्ष निमित्तं दौहित्रस्य श्राद्धं निषिद्धं तर्हि प्रतिपद्यपि क्रियमाणं तन्निषिद्धमिति ।

उच्यते—

कन्यागते सवितरि पितरोयान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्वा यावद् वृश्चिक दर्शनम् ।।

अत्र कन्या गतस्यापि श्राद्ध निमित्तत्वात् दौहित्रैस्तन्निमित्त मेव श्राद्धं कर्त्तव्यं नापरपक्ष निमित्त मिति । एतच्च शिष्टाचारानुसारात पार्वण विधानेन कर्त्तव्यमिति मधुशर्ममिश्राः ।

इत्यपरपक्षश्राद्ध प्रयोगः ;

# अथैकोद्दिष्ट श्राद्धपद्धतिः ।

अथ सिद्धान्ने जाते मध्याह्ने स्नातः शुक्ल द्विवासा श्राद्ध देश मागम्यादौ रक्षा दीपं विधायोपलिप्तायां भूमौ चासनो पर्युपविश्याचम्य पवित्रं धृत्वा मार्जनं कुर्य्यात्। ॐ अपवित्रः पवित्रो वा सर्वाऽवस्थाङ्गतोपिवा। यः स्मरेत्पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिः । ततः प्राणानायम्य गदाधरं स्मरेत् । यथा । श्राद्धारम्भे गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । स्वपितॄन्मनसाध्यात्वा ततः श्राद्धं समारभेत् । ततो यव पुष्पैः श्राद्ध भूम्य नम इति भूमिं त्रिः सम्पूज्य । ब्राह्मणानामग्रे हस्त सम्पुटं विधाय पठेत्। अक्रोधनैः शौच परैः सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिश्च मया च श्राद्ध कर्मणि। सर्वायास विनिर्मुक्तैः काम क्रोध विवर्जितैः भवितव्यं भ०। शंख चक्र धरं देवं द्विभुजं पीतवाससम्। प्रारम्भे कर्मणां विप्र पुण्डरीकंस्मरेद् हरिम् ततो हस्त सम्पुटे गौर सर्षपानादाय पठेत्। ॐ नमो नमस्ते गोविंद पुराण पुरुषोत्तम । इदं श्राद्धं हृषीकेश रक्षतां सर्वतोदिशः। ततः सर्षपान् दिक्षु श्राद्धभूमौ च सर्वतो विकरेत्। यथा। ॐ प्राच्यै नमः। ॐ अवाच्यै नमः। ॐ प्रतीच्यै नमः। ॐ उदीच्यै नमः। ॐ अपहता असुरा रक्षा ᳪ सिवेदिषदः। एवमेव तिलानपि विकीर्य। कुश त्रयानीत जलैः श्राद्ध वस्तूनात्मानं च सिञ्चेत्। ततस्तिल जल कुशानादाय संकल्पं कुर्य्यात् । ॐ अद्य–अमुकगोत्र अ० शर्माहं अ० गोत्रस्य अ० शर्मणः पितुः साम्वत्सरैकोद्दिष्ट श्राद्धं करिष्ये। ततो नीवी बंधनम्। त्वं वनेभ्य स्त्व मौषधीभ्य स्त्वं नृणां नृपते जायते शुचि रिति। कर्मपात्रं स्थाप्य गायत्रीं त्रिर्जपेत्। ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव नमो नमः। ततोऽपसव्यम्। पातित वामजानू दक्षिणामुखो भूत्वासनं कुर्य्यात् । ॐ अद्यामुकगोत्रस्यामुकशर्मणः साम्वत्सरैकोद्दिष्ट श्राद्धे इदमासनं ते स्वधा। इति मोटकं दक्षिणाग्रमुत्सृजेत् तदुपरि अपहतेति तिलान् विकीर्य अर्घ पात्रे ॐ पवित्रे स्थो० इति पवित्रं धृत्वा शन्नोदेवीति जलम्। तिलोसीति तिलान् ॐ तिलोसि सोमदैवत्यो गोसवो देव निर्मितः प्रत्नवद्भिः

पृक्तः※ स्वधया पितॄन् लोकान् प्रीणाहिनः स्वधानम इति गंधद्वारेति गंध पुष्पवत्याच पुष्पाणि प्रक्षिप्य । तत अर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि किंचिदुदकान्तरं दत्वा हस्ते ना-च्छाद्य पठेत्। ॐ या दिव्या+ आपः पयसा संवभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्ता न आपः संस्योनाः सुहवा भवन्तु। ततः दक्षिणहस्तेऽर्घ्यमादाय । ओमद्य अमुक गोत्र अ० शर्मन् वसुरूप सांवत्सरैकोद्दिष्ट श्राद्धे असावेषते हस्तार्घ्यः स्वधा नमः । ततोऽर्घ्यपात्रे पवित्रं धृत्वा असंचरे न्युब्जं कुर्य्यात् मे पितास्थानमसीति । अर्घ्यपात्रं दक्षिणा दान पर्य्यन्तं नोद्धरेत् न चालयेत्। ततो गन्धादि दानम्। ॐ अद्य० एतानि गन्ध पुष्प धूप दीप ताम्बूल यज्ञोपवीत वासांसिते स्वधा नमः। ततो मण्डलम् । यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवं मण्डलतो येन सर्वभूतानि रक्षतु ॥ ततः पारकीय भूमौ। इदमन्न मेतत् भूस्वामि पितृभ्यो नमः स्वधा। ततो भोजनपात्रे श्राद्धार्थ कल्पितान्यन्नादीनि किंचित् किंचित् परिविष्य तदुपरि मधुवातेति मंत्रेण मधु दद्यात् जलं घृतं च पात्रांतरेदत्वा न्युब्जपाणिभ्यां पात्रमालभ्य पठेत्। अत्र वाम ×हस्तोपरि दक्षिणहस्तं न्युब्जं कृत्वा पात्रमालभेत् । भार्या द्वारा परि-वेषणमुक्तम्। ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वधा इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पाँ सुरे। इति।

---

※ प्रक्षः। इत्यपि पाठः।

+ आश्वलायनेतु। या दिव्या आपः पृथिव्यां संवभूवुः०। गोभिलस्तु शिवा इति पदाधिक ममुमेव मंत्रं पठितवान् यथा—तान आपः शिवाः सस्योनारिति। अत्र तु कात्यायन याज्ञवल्क्ययोरुक्तं मंत्रो लिखितः । मैत्रा-यणीय सूत्रेतु मंत्रान्तरमुक्तम् । द्यौः पात्रं स्वधापिधानं ब्राह्मणस्त्वा पितृमुखे-ऽमृतं जुहोमि स्वधा।

× दक्षिणन्तुकरं न्युब्जं वामोपरिनिधापयेत्।
पैत्र्यं पात्रमथालभ्य पृथिवी ते पात्रमुच्चरन् ॥

जप्त्वान्नोपरि +अङ्गुष्ठ भ्रामणं कुर्य्यात् कृष्ण कव्य मिदं रक्ष मदीयमिति। इदमन्नं। इदमापः। इदमाज्यं। इदं हविरिति पुनरन्ने। ॐ अपहता० इत्यन्न समीपे तिलान् विकीर्य तिल जलान्यादाय। ओमद्य अ० गोत्र अ० श० वसुरूप सांवत्सरैकोद्दिष्ट श्राद्धे इदमन्नं परिवेष्यं परिवेष्यमाणं घृताद्युपस्करसहितं ब्राह्मणभोजन तृप्ति क्षमं अमृतस्वरूपं ते स्वधा। इति संकल्प्य पठेत्। अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्तु। ततः सव्याहृतीं गायत्रीं त्रिर्जप्त्वा मधुवातेत्यचं जपेत्। असंस्कृत प्रमीतानां त्यागिनां कुलयोषिताम् उच्छिष्टभाग धेयानां दर्भेषु विकरासनम्। ततोन्नं गृहीत्वा पठेत्। अग्निदग्धाश्च ये जीवा येप्य दग्धा कुलेमम। भूमौ दत्तेन तृप्यन्तु तृप्तायान्तु परांगतिम्। कुशोपर्यन्नं दत्वा सव्यंकृत्वाचम्य गायत्रीं जपेत्। अपसव्यं कृत्वा वेदीं कुर्यात्। अपहतेति रेखां कृत्वा कुशमैशान्यां क्षिपेत्। ततोङ्गारं गृहीत्वा पठेत्। ये रूपाणि प्रतिमुंचमाना असुराः संतः स्वधयाचरन्ति परापुरो निपुरो ये भरंत्यग्निष्टान् लोकान् प्रणुदात्वस्मात्। छिन्नमूल कुशत्रयं रेखायांस्तृणुयात्। सव्येन। ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच। नमः स्वधायै स्वाहायै नित्यमेव नमो नमः। इति त्रिर्जपित्वापसव्यो भूत्वा पुटके जल तिल गंध पुष्पाणि प्रक्षिप्यावनेजनं दद्यात्। ॐ अद्यामु० पिण्डस्थाने अत्रावने निक्ष्वते स्वधा। कुशमूले करं प्रोक्ष्य सव्येन द्विराचम्यापसव्यं कृत्वा पिण्डं वामेनपाणिना भार्यादि दत्तमादाय दक्षिणकरे कृत्वा तिल जलान्यादाय। ओमद्य असावेतत्ते पिण्डः स्वधा नमः। इति कुशोपरि पितृतीर्थेन दद्यात्। ततो वामावर्तेन स्वासं नियम्य पितरं ध्यायन् अत्र पितर मादयस्व यथा भागमावृषायस्वेति पठन्। असौमदं तु पितर यथाभागमावृषायिष्टः। इति पिण्डोपरिस्वासं निदध्यात्। ततः पूर्वदत्तावशिष्ट पात्रमादाय। ओमद्य० पिण्डोपरि प्रत्यवनेजनं ते स्वधा। इति दत्वा

---

+उत्ताने नतु हस्तेन द्विजाङ्गुष्ठ निवेशनम्।
यः करोति नरो मोहात्तद्वै रक्षांसि गच्छति॥

नीवीं विश्रंस्य सव्येनाचम्यापसव्यं कृत्वा वामेनपाणिना वस्त्रमादाय दक्षिणहस्ते धृत्वा पठेत्। ॐ नमस्ते पितारसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्तेपि तर्देष्म: एतत्ते पितर्वासः स्वधा नमः। इति पिण्डोपरि वस्त्रं धृत्वा मोटक तिल जलान्यादाय। ओमद्यं० अ० गो० एतत्तेवासः स्वधा नमः। ततः सूत्र मुत्सृजेत्। ततः पिण्डे गन्ध पुष्प धूप दीप ताम्बूलानि दत्वा तदग्रे ब्राह्मणभोजनार्थं पाचितानि सर्व व्यञ्जनान्यन्नादीनि च सर्वाणि किञ्चित् किञ्चित् दत्वा दक्षिणां दद्यात्। ततः ॐ शिवा आपः सन्तु इति जलं सौमनस्य मस्तु इति पुष्पं अक्षतं चारिष्ट मस्तु इति तंदुलान् भोजनपात्रे। तिल जलान्यादाय ओमद्यामुक गोत्रस्य० दत्तैतत् अन्न पानादिक मुपतिष्ठतामक्षय्यमस्तु। ततः सव्यं कृत्वा दक्षिणां दिशं पश्यन् सुमनाः पिण्डोपरि जलधारां पूर्वाग्रां दद्यात्। ॐ अघोराः पितरः सन्तु इति। ततः पूर्वाभिमुख अञ्जलिं कृत्वाशीः प्रार्थयेत्। ॐ गोत्रं नो वर्द्धतां दातारोनोभि वर्द्धन्तां वेदाः सन्तति रेव च श्रद्धा च नो माव्यगमत् बहुदेयं च नोस्तु अन्नं च नो बहु भवेत् अतिथींश्च लभेमहि याचितारश्चनः सन्तुमाचयाचष्म कंचन एताः सत्याशिषः सन्तु। ततोपसव्येन पिण्डोपरि सपवित्र कुशानास्तीर्य जलधारां वा दुग्धधारां दद्यात्। ॐ ऊर्ज्जंव हन्तिरमृतं घृतं पयः कीलालं परिश्रुतं स्वधास्थ तर्पयत मे पितरम्। ततः पिण्डं नम्रीभूयाघ्रायोत्थाप्य मे पिता स्वर्गेवसतु इति पात्रे उत्सृजेत् ततः पिण्डाधार कुशानुल्मुकं च वह्नौ क्षिपेत् ततः पात्रमुत्तानं कृत्वा। ओ मद्यामुकगोत्रस्यामुकशर्मणः पितुः कृतैतदेकोद्दिष्ट श्राद्ध प्रतिष्ठार्थ मिदं दक्षिणा द्रव्यंरजतं चंद्रदैवतं यथा नाम गोत्राय ब्राह्मणाय दातुमहमुत्सृजे। ॐ अभिरम्यतामिति पितरं विसर्जयेत् तत सव्येन देवताभ्यः इति त्रिर्जप्यापसव्यो भूत्वा वामेनपाणिना रक्षादीपं निर्वाप्य सव्येनकरौ पादौप्रक्षाल्य हरिस्मरणं कुर्य्यात् ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणा देवतद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः। यस्यस्मृत्या च नामोक्त्या तपो यज्ञ क्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्देत्तमच्युतम्। ततः संकल्प्याचार्याय दक्षिणां दत्वा परिपूर्णतां प्रार्थयेत्। ततः पञ्चावलीन्दद्यात्। इत्येकोद्दिष्ट श्राद्धम्।

# अथापात्रक पार्वणश्राद्धपद्धतिः ।

अथ सिद्धान्ने जाते सति मध्याह्ने स्नातः शुक्लद्विवासा श्राद्धार्थं स्वीकृते देशे यथा गतानाचार्यादि ब्राह्मणान् भक्तिमान पुरः सर मासनेषूपवेश्य तेषाम्पुरतः कुशासने भुवि यज्ञोपवीतिः प्राङ्मुख उपविश्य । आचम्य प्राणानायम्याशुचित्व निवृत्यर्थं शुचित्वातिशयार्थंम्वा पुण्डरीकाक्ष स्मरणं कुर्यात् । ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोपि वा । यः स्मरेत्पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिः । अत्र श्राद्ध वस्तून्यात्मानं च सिञ्चयित्वा रक्षादीपं निधाय कर्मपात्रं स्थाप्य पवित्रं धृत्वा जलेनापूर्य्य यव गन्ध पुष्पादि प्रक्षिप्य हस्ते नाच्छाद्य गायत्रीं त्रिर्जपेत् । तत. शंखचक्रधरं देवं द्विभुजं पीत वाससम् । प्रारम्भे कर्म्मणां विप्र पुण्डरीकं स्मरेद्धरिम् । श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । ताभ्यां चैव नमस्कृत्य ततः श्राद्धं समारभेत् । अथ यव पुष्पैः श्राद्धभूम्यै नम रिति त्रिः सम्पूज्य प्रार्थयेत् ।

मेदिनी लोकमाता च क्षितिरुर्व्वी धरा मही ।
भूमिः शैल शिला चत्वं स्थिरा तुभ्यं नमो नमः ॥
धरणी काश्यपी क्षौणी रसा विश्वम्भरा च भूः ।
जगत्प्रतिष्ठा वसुधा त्वं हि मातर्नमोस्तुते ॥
वैष्णवी भूत देवी च पृथिवी त्वं नमोस्तुते ।
देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच ॥
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ।

इति त्रिरावर्त्य श्राद्धं करिष्ये इति ब्राह्मणान्पृच्छेत् कुरुष्वेति तैरनुज्ञातो नीवीं❋ वध्नीयात् । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते

---

❋ नीवीर्नामात्र सतिल कुशानां परिहित वस्त्रोत्तराञ्चल दशानां वाम कटि संलग्न वस्त्र वहिर्भागेन सम्वेष्ट्य गोपनम् । पितृ दैवत्या वैनी विरिति शतपथीय लिङ्ग दर्शनेन पितृ दैवत्यं कर्म्मनी विमता कर्त्तव्यमित्यवगमात् ।

जायते शुचिः । गौरसर्षपानादाय* करसम्पुटे धृत्वा पठेत् । ॐ नमो नम नमस्ते गोविन्द पुराण पुरुषोत्तम। इदं श्राद्धं ऋषीकेश रक्षतां सर्वतो दिशः । ततो विकिरेत् ! ॐ प्राच्यै नमः । ॐ अवाच्यै नमः । ॐ प्रतीच्यै नमः । ॐ उदीच्यै नमः एवं तिलानपि विकीर्य ।

ततः कुशान् धारयेत् । द्वौ दर्भौ दक्षिणे हस्ते सव्येत्रीणि एव च । पाद मूले शिखायाञ्च सकृत् यज्ञोपवीतके ।। मोटक तिल जलान्यादाय संकल्पं कुर्य्यात् । ओमद्येत्यादिकाल ज्ञानं कृत्वा। अमुक गोत्रः अमुक शर्माहं अमुक गोत्राणां पितृ पितामह प्रपितामहानां तथा च अ० गोत्राणां मातामह प्रमातामह वृद्धप्रमातामहानां वसु रुद्रादित्य स्वरूपाणां सपत्नीकानां विश्वेदेवा पूर्वकमपात्रक पार्वणश्राद्धं करिष्ये । तत उत्तराभिमुखो भूत्वा पश्चिमदिशि आसनद्वयं स्थाप्य तदुपरि यवोसि० इत्यनेन यवान् विकीर्य मोटक यव जलान्यादाय। ओमद्य अ० गोत्राणां पितृ पितामह प्रपितामहानां अमुकामुक शर्म्मांणां पार्वणश्राद्ध सम्बन्धिनो विश्वेदेवा इदमासनं वो नमः । अपरंच । ओमद्य० मातामह प्रमातामह वृद्धप्रमातामहानां अमुक पार्वण श्राद्ध सम्बधिनो विश्वेदेवा इदमासनं वो नमः । ततो हस्ते यवान् धृत्वा प्रश्न वाक्यं पठेत्। पुरुरव आर्द्रवः संज्ञकान् विश्वान् देवान्

---

* अत्रावसरे विष्णु धर्मोत्तरे लिखितम् ॥ अपयन्त्व सुराद्वाभ्यां यातुधान विसर्जनम् । तिलैः कुर्य्यात् प्रयत्नेन अथवा गौरसर्षपैः । मंत्रौ । अपयंत्व सुराः पितृरूपाये रूपाणि प्रतिमुच्या चरन्ति परा पुरोनि पुरो ये भयन्त्यग्निष्ठान् लोकान् प्रणु दात्वस्मात् । अपयन्त्व सुरा ये पितृषद् उदीरतामवर उत्परास उन्मध्यमाः पितरः सौम्यास असुंयईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु । इति । निहन्मि सर्वं यदमेध्य वद्भवेद्धताश्च सर्वेऽसुर दानवामया । ये राक्षसा ये च पिशाच गुह्यकाः हतामया यातुधानाश्च सर्वे । एतेन मंत्रेण सुसंयतात्मा तिलान् क्षिपेद्दिक्षवथ सर्षपांश्च । यस्मिन्देशे पठ्यते ह्येष मंत्रस्तं वै देशं राक्षसा वर्जयन्ति । रक्षार्थं पितृ सत्रस्य त्रिः कृत्वः सर्वतो दिशं । तिलांस्तु प्रक्षिपेन्मंत्रमुच्चार्य्यापहता इति ॥ ब्रह्माण्ड पु० ॥

आवाहयिष्ये इत्युक्त्वा। ॐ विश्वेदेवा॰ स आगत शृणुताम इमं हवं इदं वर्हिर्निषीदत। विश्वेदेवा शृणु ते मं हवं मे ये अन्तरिक्षे ये उपद्यविष्ठ ये अग्निजिह्वा उतवा यजत्रा आसाद्यास्मिन् वर्हिषि मादयध्वम् ॐ यवोसि यवयास्म द्वेषो यवयाराती दिवेत्वान्तरिक्षायत्वा पृथिव्यैत्वा शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि। इति यवान् विकीर्य्य अञ्जलिं कृत्वा प्रार्थयेत्। आगच्छन्तु महाभागा विश्वेदेवा माहाबलाः। ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते। ततो देवार्घ्य पात्रद्वयं स्थाप्य। पवित्रेस्थो इति मंत्रेण पवित्रे धृत्वा शन्नो देवीति जलं यवोसीति यवान् गन्धद्वारेति गन्धं पुष्पवत्या च पुष्पाणि प्रक्षिप्य। एकं पात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि किञ्चि दुदकान्तरं+ दत्वा हस्तेनाच्छाद्य। ॐ या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थवीर्याः हिरण्यवर्णा यज्ञियास्तान आपः संस्योनाः सुहवा भवन्तु। दक्षिणहस्तेऽर्घ्यपात्र यव जलान्यादाय। ओमद्य अ० गोत्राणां पितृ पितामह प्रपितामहानाममुकामुक शर्म्मणां सपत्नीकानां पार्वण श्राद्ध सम्बधिनो विश्वेदेवा एषवो हस्तार्घ्यो नमः। इति ×मोटकोपरि पात्रात् किंचिज्जलं

---

॰ कात्यायनः—विश्वेदेवास इत्याभ्यामावाह्य विकरेत् यवान्। ब्रह्मपुराणे-तवो मंत्रं जपेन्मौनी विश्वेदेवा स आगत। द्वितीयं च जपेन्मंत्रं विश्वेदेवाः शृणु तेति च॥ जपेत्तृतीयं मंत्रं तु पौराणं पुण्यवर्द्धनम्। आगच्छन्त्विति।

+ इदं पाद्य रूपम्।

× मोटकोपरि यव विकरणे मंत्रमाह कात्यायनः—यवोसि धान्य राजस्त्वं वारुणो मधुमिश्रितः। निर्णोदः सर्वं पापानां पवित्रमृषि संस्तुतम्॥ एतेषां गन्धादि मंत्राणां दैवे पित्र्ये च साधारण्य मुक्तम्। गन्धद्वारेति गन्धं-पुष्पवत्या च पुष्पाणि। पुष्पवतीरिति मध्यप्रतीकेन मंत्रो विनियुक्तः। स च। ॐ ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः। अयं वो गर्भ ऋत्वियः प्रयत्नं सधस्थ मासदन्। धूरसीति धूपम्। इदं ज्योतिरिति दीपं। युवा सुवासा इति वस्त्रं। अत्रिस्तु युवंवस्त्रा णीत्यनेन। स च। युवं वस्त्राणि पीवसावसाथे युवो रच्छिद्रा-

पुष्पं च क्षिपेत् । एवमपरं च मातामहा० विश्वेदेवेभ्यो दद्यात् । तत अर्घ्ये पुनः पूर्वदत्त पवित्रादिकं निधायोत्तरभागे विश्वेभ्यो देवेभ्यः स्थान मसीत्युक्त्वा उत्तानमेव धारयेत् । अथ गन्धादिदानम् । अयं वो गन्धः । इदं वः पुष्पः । अयं वो धूपः । अयं वो दीपः । अयं वो ताम्बूलः । इदं वो वस्त्रः । इदं वो यज्ञोपवीतः । इदं वो माल्यः । ततो यवजलान्यादाय । ओमद्यामुक गोत्रा० एतानि गन्ध पुष्प धूप दीप ताम्बूल यज्ञोपवीत वासांसि वो नमः । एवं मातामहानामपि देयं । ततः पूजनानन्तरमत्यन्त विनीतः सन् अञ्जलिम्बध्वा प्रार्थयेत् ।

मंत्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादात् भवतां मम ॥

ततश्चाचम्य देवताभ्य० इति त्रिर्जपेत् तत आवाहनादित आच्छादनान्तं विश्वान् देवान् सम्पूज्य पितृयज्ञं समारभेत् । तत अपसव्यं कृत्वा दक्षिणाभिमुखः पातित वामजानुः पितृपूजनार्थं पृथक् कर्मपात्रं स्थाप्य कुश जल तिल पुष्प गन्धादि प्रक्षिप्य न्युब्ज पाणिभ्यामाच्छाद्य देवताभ्यः पि० इति त्रिः पठित्वाञ्जलिंकृत्वा कर्मपात्रं सुसम्पन्न मस्तु इति त्रिः प्रार्थयेत् । जल तिल समन्वितान् मध्य भङ्गेन द्विगुणी× कृतान् मोटक रूपान् त्रीन् कुशानादाय । ओमद्य अ० गोत्रस्यामुकशर्मणः सपत्नीकस्य* वसुरूपस्य पार्वण श्राद्धे इदमासनं स्वधा । एवं

---

मन्तवो ह सर्गाः । अवातिरतमनृतानि विश्वऋतेन मित्रावरुणा सचेथे इति । यज्ञोपवीतमिति यज्ञोपवीतं । अस्यानंतरं यथा शक्त्यालङ्करण छत्र कमडल्वादीनि यद्यदिष्टानि देयानि । अत्र च मंत्रोच्चारणानन्तरं गन्धादि दान वाक्यान्युच्चारणीयानि यथा अयं वो धूप इत्यादितानि च पृथक् पृथक् देयानि ।

× ब्रह्मपुराणे वाराहकृत श्राद्धप्रयोगे श्लिष्ट मूलाग्रदर्भास्तु सतिलान् वेदवादवित् । द्विगुणी करणेन श्लिष्टानि परस्पर संलग्नानि मूलान्यग्राणि च येषान्ते श्लिष्ट मूलाग्राः ।

* इह सपत्नीकानामिति तु प्रमीतायामेव पित्र्यादि पत्न्यां प्रयोज्यं नान्यथा ।

पितामहस्य रुद्र रूपस्य प्रपितामहस्यादित्यरूपस्य—सपत्नीकस्य पृथक् पृथगासनानि दद्यात्। एवं सपत्नीकानां मातामह प्रमातामह वृद्धप्रमातामहानामपि पृथगासनानि दद्यात्। षट्सु आसनेसु अपहतेति मंत्रेण तिलान् प्रक्षिपेत् तत भोजनपात्राणि स्थाप्य पितॄनावाहयिष्यामि ये दिव्या ये च मानुषा इत्युक्त्वा। उशन्तस्त्वा निधीमहि उशन्तः समधीमहि उशन्न शत आवह पितॄन् हविषे अत्तवे एत पितर सौम्यासो गम्भीरेभिः पथिभिः पितृयानै आयुरस्मभ्यं दधत प्रजां च रयिञ्च पोषैरभिनः सचध्वम्। इत्यावाह्य ॐ अपहता० इति भोजनपात्रे तिलान् प्रक्षिप्य ॐ आयन्तुनः पितरः सौम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्÷

---

÷ ब्रह्मपुराणेतु जप्य मंत्रानन्तरं प्रार्थनाचोक्ता। सोमवन्तो वर्हिषदश्चाग्निष्वात्ताश्च ये परे। पितरः पुण्य यशशः सर्वेप्यायन्तु न स्त्विति ॥ अत्राह प्रचेताः। उशन्तायन्तुनो मंत्रान् जपे द्वै दक्षिणामुखरिति। अत्र मंत्रानिति बहुवचनेन कल्पसूत्र— स्मृति—पुराणेतिहासोपदिष्टा अन्येकरण मंत्रा अनुमंत्रण मंत्राश्चाभ्यनुज्ञायन्ते। यथा कठसूत्रे। पितॄमावाहयिष्यामीत्युक्त्वा अपयन्त्वसुरा इति द्वाभ्यां तिलैः सर्वतोऽवकीर्य्य। एत पितर आगच्छत पितर आमेयं त्वन्तर्दधे पर्वतैरिति जपित्वा वाहयेदिति। अपयन्त्व सुरा इति मंत्रद्वयं प्राक् प्रदर्शितम्। अवशिष्टं मंत्रद्वयं लिख्यते। आमेयन्तु पितरो भागधेयं विराजाहूताः सलिलात् समुद्रात्। अस्मिन् यज्ञे सर्वकामाल्लभन्तामक्षीयमाणानुपजीवन्त्वेतानिति। अन्तर्दधे पर्वतैरुत मह्या पृथिव्या दिवाग्निरनन्ताभिरनन्तरान्यात् पितॄन्दधे अन्तर्दधे ऋतुभिरहोरात्रैः ससन्ध्यकैरर्द्धमासैरिति। कपिञ्जल कठ शाखायान्तु मंत्रद्वयम्। तच्चैवं। एतत्पितरो मनोजवा आच्छत पितरो जवैः ये निखाता ये परोप्ता गर्भा ये च पेदिरे। इत्येकः। अपरस्तु। सर्वांस्तानग्र आवाहयत् पितॄन् हविषे अत्तवे आगच्छत पितरो मनोजवसः पितरः शुधध्वमिति। बौधायनस्त्वावाहने मंत्रान्तरं दर्शितवान्। पितॄनावाहयत्यायात पितरः सौम्या गम्भीरैः पथिभिः पूर्वैः। प्रजामस्मभ्यन्ददतो रयिञ्च दीर्घायुष्ट्वञ्च शतशारदञ्चेति। मानव मैत्रायणीय सूत्रेतु मंत्रान्तरमप्युक्तम्। उशन्तस्त्वाहवामहे परेतनः पितरः

ततः पवित्रादियुतमर्घ्यपात्रं दक्षिणकरेण वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा न्युब्ज दक्षिणहस्तेनाच्छाद्य ॐ या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थवीर्याः। हिरण्यवर्णा यज्ञियास्तान आपः संस्योनाः सुहवा भवन्तु। दक्षिणकरे अर्घ्यपात्र मादाय। यास्तिष्ठन्ति या धावन्त्य दुग्धाः परिसंस्तुषी–र्आद्भिर्विश्वस्य धात्री भिरन्तरन्यान् पितृन्दधे। अमृता वागमृता आपोऽग्निर्वाचोऽनृतं तत् त्रि वृदेकधाम–ताभिर्मत्प्रत्तोभिः स्वधयामदध्वमिहास्मभ्यं वसीयोस्तु

---

सौम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः दत्वारसम्भ्यन्द्रविणे ह भद्रं रयिञ्च नः सर्वं वीरं नियच्छतेति। स्मृतिचन्द्रिकाकारस्तु पुष्प पूजने विहितं नमो व इति मंत्र मत्र दर्शितवान्। तन्निर्मूलत्वादुपेक्षणीयम्। अत्रास्मिन्प्रकरणे तु गोभिलोक्तः प्रयोगो दर्शितः। अत्रावसरे सर्वैरपि च श्राद्धं कर्तृभिरनुमंत्रण मंत्र जपानन्तरमप-हतेति मंत्रेण गृह गर्भे तिल विकरणं कार्य्यं। आयात पितर इत्याद्यनेक रूपाणां मंत्राणां मध्ये कस्यचिदपि मंत्रस्यैकस्य प्रयोग अवश्यमेव कार्य्यं आवाहित पित्र्युपवेशनार्थत्वात् अञ्जलिं कृत्वा प्रार्थयेत्। सोमवन्तो वर्हिषदश्चाग्निष्वात्ता-श्चयेपरे। पितरः पुण्य यशशः सर्वेप्यायन्तु न स्त्विति। ततः षडर्घ्यपात्राणि स्थाप्य प्रतिपात्रेषु द्विगुणीकृतानि त्रीणि त्रीणि कुश पवित्राणि वा द्विगुणी कृतं त्रिभिर्दर्भैस्त्रिशिख पवित्रमेकं प्रतिपात्रे दक्षिणाग्रं पवित्रेस्थ इति मंत्रेण निधाय शन्नो देवीरित्यनयर्चा पितृतीर्थेन प्रत्येकं जलमासिच्य तिलोसीति तिलान्प्रक्षिप्य गन्धद्वारामिति गन्धं श्रीश्चते लक्ष्मीश्चेति पुष्पं निक्षिपेत्। यास्तिष्ठन्त्य मृता वागिति यन्मे मातेति च पाद्यमिति पूर्वोक्त विष्णुवाक्यानुसारेण प्रतीकद्वयेन पित्रा-देरेकैकस्य पाद्ये समुच्चितौ द्वौ मंत्रौ विनियुक्तौ। यन्मे मातेति चाद्य मंत्र प्रतीकेन सूचितेषु क्रमपठितेषु त्रिषुमंत्रेष्वेकैकः पूर्वोक्ताभ्यां समुच्चित्य पित्रादि पाद्योविभज्य विनियुज्यते। तेचैवं। यास्तिष्ठन्ति या धावन्त्य दुग्धाः परिसंस्तुषीः। अद्भि-र्विश्वस्य धात्रीभिरन्तरन्यान् पितृन्दधे। अमृता वागमृता आपोऽग्निर्वाचोऽनृतं तत् त्रिवृदेक धाम। ताभिर्मत्प्रत्तोभिः स्वधया मदध्व मिहास्मभ्यं वसीयोस्तु देवाः। यन्मेमाता प्रलुलुभे यच्चचारानुव्रतं। तन्मेरेतः पिता वृङ्क्तां नामाभिरन्योऽवपद्यताम्। पुनः यास्तिष्ठन्ती त्यादिभिर्मंत्रैरेकैकस्य पित्रादेस्तत्तदधिष्ठानभूते पाद्यं निवेद्यै-

देवाः । यन्मे माता प्रलुलुभे यच्च चारानुव्रतं। तन्मे रेतः पिता वृङ् नामाभिरन्योऽवपद्यताम् ।। इति मंत्रत्रय मुच्चार्य्य । ओमद्य अमुक गोत्र अस्मत् पिता अमुक शर्मन् सपत्नीक वसुरूप एषते पाद्यं स्वधा नमः एषते अर्घ्यः स्वधा नमः—एषते आचमनीयं स्वधा नमः । एवं दद्यात् एवं पितामहादिभ्यः दद्यात् । पितामह रुद्र रूप—प्रपितामह आदित्य रूप । मातामह वसु रूप—प्रमातामह रुद्ररूप—वृद्धप्रमातामह आदित्य रूप । मंत्राणां भेद निरूपणन्तु प्राक् प्रदर्शितम् । एवं पित्रादिभ्यः मातामहादिभ्यश्च पाद्यं अर्घ्यं आच-

---

वार्घ्यं दद्यादिति विष्णुः । यास्तिष्ठन्ति अमृतावाक् द्वौ मंत्रौ पठित्वा । यन्मे पितामही प्रलुलुभे यच्च चारानुव्रतं । तन्मे रेतः पितामहो वृङ् नामाभिरन्योऽव पद्यताम् । पुनः पूर्वोक्तौ पठित्वा । यन्मे प्रपितामही प्रलुलुभे यच्च चरानुव्रतं । तन्मेरेतः प्रपितामहो वृङ् नामाभिरन्योऽवपद्यताम् । एवं ब्रह्मपुराणेपि । यास्तिष्ठन्तीत्यादि मंत्रद्वय मुक्त्वा यन्मे मातेत्यादेः मंत्रद्वयस्य पित्रादि त्रयार्घ्यं दाने विभज्य विनियोगो दर्शितः । यास्तिष्ठन्त्य मृता वाक् च यन्मे मातेति वै पितुः । यन्मे पितामहीत्येवं ददावर्घ्यं पितामहे ॥ यन्मे प्रपितामहीति दद्यौ च प्रपितामहे । कुश गन्ध तिलोन्मिश्रं सपुष्पमपसव्यतः । तद्वन्मातामहेभ्यश्च विधिं चक्रे जनार्दनः ॥ तद्वदिति—यथा पित्रादीनां पाद्यं दत्तं तथा मातामहादीनामपि पाद्यादि दानमित्यर्थः । अनेनाति देशेन मातामहादि पाद्यादावप्यतेष्वव मंत्रेषु प्रापितेषु यन्मे मातेत्यादि मंत्रत्रये समवेतार्थत्वार्थं मात्रादि पदस्थाने मातामह्यादि पदोहः कार्य्यः । तद्यथा । यन्मे मातामही प्रलुलुभे यच्च चारानुव्रतम् । तन्मेरेतो मातामहो वृङ् नामाभिरन्योऽवद्यताम् यन्मे प्रमातामही प्रलुलुभे यच्च चारानुव्रतम् । तन्मेरेतो प्रमातामहो वृङ् नामाभिरन्योऽव पद्यताम् ॥ यन्मे वृद्धप्रमातामहो प्रलुलुभे यच्च चारानुव्रतं । तन्मेरेतो वृद्धप्रमातामहो वृङ् नामाभिरन्योऽव पद्यतामिति । अतएव विष्णुधर्म्मोत्तरे मंत्रादिरिति कर्त्तव्यता पाद्यार्घ्ययोः साधारण्ये नैवोक्ताः । कुशैस्तिलैश्च मिश्रेण वारा गन्धयुतेन च । यातिष्ठन्ति या धावन्त्यमृतावागितिद्वयम् ॥ यन्मे मातेति च तथा पाद्यमर्घ्यञ्च कारयेदिति । कठसूत्रेतु अर्घ्यानन्तरमाचमनीयमप्युक्तम् । यास्तिष्ठन्त्यमृतावाक् यन्मे मातेतित्रिभिः पाद्यार्घ्याचमनोदकानि चानयेदिति ।

मनीयं च दद्यात्। अत्रार्घ्यपात्रास्थिताक्षत पुष्पाणि मोटकोपरिक्षिपेत् इति पितृपूजनं विधाय पुनः पवित्राणि अर्घ्यपात्रे निधाय प्रपितामह पात्र स्थित जलादीनि पितामहपात्रे कृत्वा तानि सर्वाणि पितृपात्रे कृत्वा पितृपात्रं पितामह पात्रे धृत्वा उभौ प्रपितामहपात्रे धृत्वा असंचर देशे वामभागे पात्राणि कुशोपरि न्युब्जी कुर्य्यात् पितृभ्यः स्थानमसीति दक्षिणा दान पर्य्यन्तंनो-द्धरेन्न चालयेत्। ततः पूर्ववत् पृथक्। पृथक् पृथक् पितृभ्यः मातामहा-दिभ्यः गन्धादि आच्छादनान्तं दत्वा तिल जल कुशान्यादाय ओमद्य अ०गोत्रा अस्मत्पितृ पितामह प्रपितामहा अमुकामुक शर्म्माणः सपत्नीकाः वसु रुद्रादित्यरूपा एतान गन्ध पुष्प धूप दीप ताम्बूल यज्ञोपवीत वासांसि वयः स्वधा नमः। एवं मतामहादिभ्योपि दद्यात्। सव्यं कृत्वाचम्य उत्तराभिमुखो भूत्वा देवानां पृथक् पृथक् जलपात्रसहितं मण्डलं कुर्य्यात्। ततो देवपात्रद्वये अन्नं परिविष्य तदुपरि मधुवातेति मंत्रेण मधुं दत्वा जलं घृतं च पात्रान्तरे दद्यात्। ततोत्तान हस्ताभ्यां भोजनपात्रमालभ्य पठेत्। पृथिवी ते पात्रं द्यौरपि धानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वाहा—इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढ मस्यपा ँ सुरे स्वाहा कृष्ण हव्य मिदं रक्षमदीय मिति। उत्तान हस्तेन देवतीर्थेनान्नं स्पृशन् इदमन्नं इमाप इदमाज्यं इदं हविः। अन्न समीपे यवोसीति यवान् विकीर्य यव जलान्यादाय। ओमद्यामुक गोत्राणां पितृ पितामह प्रपितामहानां सपत्नीकानां पार्वण श्राद्ध सम्ब-न्धिनो विश्वेदेवा इदमन्नं परिवेष्यं परिवेष्यमाणं घृताद्यु पस्करसहितं ब्राह्मणभोज न तृप्तिक्षमं अमृतरूपं वो नमः। अपरंच मातामहादि० वैश्वे० दद्यात्। ततः हस्त सम्पुटौ कृत्वा प्रार्थयेत्। अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्तत्सर्वं मच्छिद्र मस्तु ततो घृतप्लुतेन मधुरान्नेन पुटकस्थित जले-ॐ अग्नये कव्यवाहनाय स्वाहा—सोमाय पितृ मते स्वाहा—इति-आहुतिद्वयं जुहुयात्। ततोपसव्यं कृत्वा दक्षिणामुखो भूत्वा पत्नी द्वारा दीयमानमन्नं ( वा तत् द्वारैव ) परिविष्य मधुवाते-त्यनेनान्नो परिमधुं दत्वा जलं घृतं च पात्रान्तरे निधाय न्युब्ज पाणिभ्यां भोजनपात्रमालभ्य पठेत्। ॐ पृथिवी ते० इदं विष्णुर्वि० कृष्ण कव्य

मिदं रक्तमदीय मिति न्युब्ज पाणिनाङ्गुष्ठ भ्रामणं कुर्वन् पठेत्–इदमन्नं–इमापः–इदमाज्यं—इदं हविः पुनरन्ने। अपहतेति—अन्नसमीपे तिलान् विकीर्य्य दक्षिणकरे तिल जल कुशान्यादाय–वामकरेण पात्रमालभमानः–ओमद्य अमुक गोत्रास्मत् पित अमुक शर्मन् सपत्नीक वसुरूप इदमन्नं परिवेष्यं परिवेष्यमाणं च घृताद्यु पस्कर सहितं ब्राह्मण भोजन तृप्ति क्षमं अमृत रूपं ( ते वा ) तुभ्यं स्वधा नमः। एवमपराणि। ओमद्य अ० गो० अस्मत्पितामह सपत्नीक रुद्ररूप इदमन्नं परिवेष्यं परिवेष्यमाणं घृताद्यु पस्करसहितं ब्राह्मण भोजन तृप्ति क्षमं अमृत रूपं तुभ्यं स्वधा नमः। ( एवमेवं प्रतिपात्रं पृथिवी ते पात्रमित्यारभ्य संकल्पान्तं कुर्य्यात् गोत्र सम्बन्ध नामानि च पृथक् पृथक् उच्चारणीयम्। ) ॐ तत्सत्–इत्युच्चार्य्य तदुदकं पितृतीर्थेन भूमौ निक्षिपेत्। यथा पितृ पितामह प्रपितामहेषु वसु रुद्रादित्य नामानुकीर्त्तनं करोति तथैव मातामहादिष्वपि वस्वादि रूपानुकीर्त्तनं कुर्य्यात्। तत अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्तत्सर्वं मच्छिद्रमस्तु—इत्युक्त्वा सावित्रीं पितृदैवत्यां गायत्रीं मधुमतीं च सव्येन जपित्वापसव्यो भूत्वा ततस्तिल कुशान् गृहीत्वा—असंस्कृत प्रमीतानां त्यागिनां कुलभागिनां। उच्छिष्टभागधेयानां दर्भेषु विकरासनम्। इति सतिलान्दर्भान्दक्षिणाग्रान् निधापयेत्। ततस्तिल मधुयुतमन्नमादाय येस्मत्कुलेतु पितरो लुप्तपिण्डोदक क्रियाः। ये चाप्य कृत चूडास्तु ये च गर्भाद्विनिःसृताः। येषां दाहोन क्रियते अग्निदग्धाश्च ये परे। भूमौदत्तेन तृप्यन्तु तेपि यान्तु परांगतिम्। इत्यन्नं कुशोपर्युत्सृजेत्—सव्यं कृत्वा ततः प्रक्षाल्य हस्तौ च त्रिराचम्य हरिं स्मरेत्। सव्या हृतिं सप्रणवां गायत्रीं च पठेत्तथा। ततोपसव्यं कृत्वा–उपलिप्ते शुचौ देशे स्थानं कुर्वीत सैकतम्–मण्डलं चतुरस्रं वा दक्षिणावनतं महदिति अत्र पितृभ्य एका माता महादिभ्य एकेति द्विर्वालुका वेदी कार्या तदुपरि सव्योत्तराभ्यां पाणिभ्यां कुशै अपहतेति रेखां कुर्य्यात्। तानैशान्यां क्षिपेत् जलेनाभ्युक्ष्य उल्मुक भ्रामणम्—ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरोनिपुरोये भरन्त्यग्निष्ठान् लोकान् प्रणुदात्वस्मात्। इत्युल्मुकं वेद्यु परिभ्राम्य दक्षिणतोनि दध्यात्।

❀ एकमूलान् दक्षिणाग्रान् दर्भान् वेद्यु परिस्तृणुयात् । सव्यं कृत्वाचम्य देवताभ्य० त्रिर्जपेत् ततोपसव्यं कृत्वा पुटकेषु जल तिल गन्ध पुष्पाणि प्रक्षिप्य-पुटकं हस्ते धृत्वा-ॐ अद्य अ० गोत्र अस्मत्पित अ० शर्म्मन् वसुरूप सपत्नीक पार्वण श्राद्धे पिण्ड स्थाने अत्रावने निक्ष्वते स्वधानमः ।

---

❀ एकमूल संलग्न बहुशिखान् । जातूकर्ण्यः—उपमूलं समास्तीर्य्यं-दर्भानुच्छिष्ट सन्निधौ । तैत्तरीयश्रुतौ सकृदाच्छिन्नं बर्हिर्भवति सकृदिवहिपितरः । आपस्तम्बः—समूल सकृदाच्छिन्नं बर्हिराहरति सकृदाच्छिन्नानि वा तृणान्युप-मूलन्दितानि । उपमूलेलूनानां सकृदाच्छिन्नत्वमुक्तं शतपथे । अथ सकृदाच्छिन्ना-न्युपमूलन्दितानि भवन्त्यग्रमिव देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणां तस्मादुपमूलन्दितानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदुह्येव पराञ्चः पितर-स्तस्मात्सकृदाच्छिन्नानि भवन्ति । दितानि-खण्डितानि-दोऽवखण्डन इत्यस्य निष्ठान्तं रूपम् । कात्यानः । उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वेति । सा च लेखा यदि दक्षिणाग्रा तदा दर्भानपि दक्षिणाग्रा नास्तृणुयात् । अत्रापस्तम्बेन पिण्ड पितृयज्ञे दर्भास्तरणे मंत्रोदर्शितः । सकृदाच्छिन्नं बर्हिरूर्णा मृदुस्योनं पितृभ्यस्त्वा भराम्यहं अस्मिन् सीदन्तु मे पितरः । सौम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति ॥ अत्र शङ्ख लिखिताभ्यां पिण्डभूमौविष्टर त्रयनिधानमुक्तं । विष्टरां-स्त्रीन्निदध्यादिति । यमस्त्वत्र विशेषमाह । विष्टरांस्त्रीन् वपेत्तत्र नाम गोत्र समन्वितान् । अद्भिरभ्युक्ष्यविधिवत् तिलैरभ्यवकीर्य्य चेति । दर्भास्तरणानन्तर-मावाहन पूर्वकं पितॄणां स्थान कल्पनमाह देवलः । अथ साञ्जलिरुत्थाय स्थित्वा चावाहयेत्पितॄन् । पितरो मे प्रसीदन्तु प्रयान्तु च पितामहाः ॥ इतिसंकीर्त्तयन्तूष्णीं तिष्ठेत् क्षणमनुच्छ्वसन् । आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पये-दिति ॥ करे दर्भान् गृहीत्वा पित्रे इदं स्थानं पिहामहायेदं स्थानं प्रपितामहायेदं स्थानं इत्येवं क्रमेण दर्भाग्रै निर्दिशेत् । शेषं व्यक्तम् । अत्रै-कैकमेकैकस्मिन् पिण्डे विनियुञ्जानस्तान्मंत्रान् प्रतीक ग्रहणेन दर्शयति यमः । पूर्वं पिण्डं प्रयच्छेत्तु पित्र्यस्तु पृथिवीति च । पितामहाय त्वपरमन्तरिक्षेति दापयेत् ॥ प्रपितामहाय ततस्तृतीयन्तु निवेदयेत् । द्यौर्दर्विरिति मंत्रेण श्रुति रेषा पुरातनी ॥ विष्णुरप्याह । उच्छिष्ट सन्निधौ दक्षिणाग्रेषु दर्भेषु पृथिवी

एवमपराणि। ततो भार्यादि द्वारा सतिल हुत शेषान्न कृतान् मधु घृताभ्या मभिधारितान् षट् पिण्डान् किञ्चिदन्नमवशिष्य कारयेत्। भार्या दत्तमेकं पिण्डं वामहस्तेनादाय दक्षिणे कृत्वा–ओंमद्यामुक गोत्र अस्मत्पित अमुक शर्म्मन् वसुरूप सपत्नीक पार्वण श्राद्धे असौ एतत्ते पिण्डः स्वधा नमः। एवं यत्र यत्र यस्य यस्यावनेजनं कृतं तत्र तत्र तेनैव क्रमेण तस्य तस्य पिण्डं दद्यात् एवं पितामह–प्रपितामह–मातामह–प्रमातामह–वृद्ध प्रमातामहेभ्यः पृथक् पृथक् स्पर्शहीनान् ईषत् सक्तान् पिण्डान्दत्वा शेषान्नं पिण्डवत् कृत्वा हस्ते गृहीत्वा पठेत्। पितृवंशे मृताये च मातृ वंशे तथैव च। गुरु श्वसुर बन्धूनां ये चान्ये बान्धवा मृताः। ये मे कुले लुप्तपिण्डाः पुत्र दार विवर्जिताः। क्रियालोप गताये च जात्यन्धाः पङ्गवस्तथा। विरूपा आम गर्भांश्च ज्ञाता ज्ञाताः कुले मम। तेभ्यः पिण्डं मयादत्तमक्षय्य मुपतिष्ठताम्। प्रपितामहा दक्षिणे वेद्यु परि चतुर्थं पिण्डं दद्यात्। ततः कुशमूले करं प्रोक्ष्य सव्यं कृत्वा द्विराचम्य देवताभ्यः पि० इति त्रिर्जपित्वापसव्यो भूत्वा। अत्र पितरो मादयध्वं यथा भागमा वृषायिध्वम्। इत्यनेन वामावर्त्तेन स्वासं नियम्य। अमीमदन्त पितरो यथा भागमा वृषा यिषत। इत्यनेन पिण्डो परिस्वास मुच्छ्‌वसेत्। ततः पिण्डोपरि प्रत्यवनेजनं दद्यात्। पूर्व दत्तावनेजन पात्रमादाय ॐ

---

दर्विरक्षितेत्येकं पिण्डं पित्रे निदध्यात्। अन्तरिक्षं दर्विरक्षितेति द्वितीयं पितामहायद्यौर्दर्विरक्षितेति तृतीय प्रपितामहायेति। अस्यार्थं हरि हरो व्याख्यातवान् मंत्रपूर्वकम्। पृथिवी दर्विरक्षिता तृप्तिः स्वधानुपस्नातां पृथिवी दर्विमक्षितां तृप्तिं स्वधामनुपस्तामग्निरिव पृथिवीमुपजीवासौ ये चात्र त्वान्वेषान्ते स्वधा। इत्यनेन मंत्रेणैकं पिण्डं पित्रेनिदध्यात्। अन्तरिक्षं दर्विरक्षिता तृप्तिः स्वधानुपदस्नान्तदन्तरिक्षं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां वायुरिवान्तरिक्षमुपजीवासौ ये चात्र त्वामन्वेषान्ते स्वधा। इति द्वितीयं पिण्डं पितामहाय दद्यात्। द्यौर्दर्विरक्षितां तृप्तिः स्वधानुपदस्ता तान्दिवंदर्विमक्षितां तृप्तिं स्वधामनुपदस्तां सूर्य्य इव दिवमुपजीवासौ ये चात्रत्वां त्वेषान्ते स्वधेति मंत्रेण तृतीयं पिण्डं प्रपितामहाय निदध्यादिति।

अद्यामुक गोत्र अस्मत् पित अमुक शर्म्मन् सपत्नीक वसुरूप पावण श्राद्धे पिण्डोपरि प्रत्यवनेजनं ते स्वधा। एवमपराणि। गोत्र सम्वन्ध नामानि यथावत् परिकीर्त्तयेत् नीवीं विस्रंस्य सव्येनाचम्यापसव्यो भूत्वा वामहस्तेन वस्त्रौचादाय दक्षिणेन नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरोदत्त सतोवः पितरो देष्म–इत्युच्चार्य्य❀–एतद्वः पितरो वासः स्वधा नमः। इति दद्यात्। एवं सर्वेषु पिण्डेषु पृथक् पृथक् वासांसि दत्वा जल तिलान्यादाय–अद्य–अमुक गोत्रा अस्मत्पितृ पितामह प्रपितामहा अमुकामुक शर्म्माणः सपत्नीकाः वसु रुद्रादित्य रूपाः पिण्डोपरि एतद्वो वासः स्वधा। इति संकल्प्य वस्त्र मुत्सृजेत्। प्रत्येकं पिण्डेषु गन्ध पुष्प धूप दीप ताम्बूल पूगीफल यज्ञोपवीत दक्षिणानि दत्वा श्राद्धार्थं पाचितानि सर्वं व्यञ्जनानि फलानि पेय सहितानि पिण्डमूले पृथक् पृथक् दद्यात्। ततः सव्यं कृत्वा ॐ शिवा आपः सन्तु इति जलं। सौमनस्य मस्तु इति पुष्पं अक्षतं चारिष्ट मस्तु इति तन्दुलान् पित्र्यासने दत्वा शिवा आपः सन्तु इति जलं सौमनस्य मस्तु इति पुष्पं अक्षतं चारिष्ट मस्तु इति यवान्

---

❀ शतपथस्तु–नमो व इत्यञ्जलिं करोति। अञ्जलिः करस्पुटः अञ्जलिमावध्य पिण्डाभिमुखः पितृभ्यो नमस्कारान् कुर्य्यादित्यर्थः। ते च मंत्रा वाजसनेपिभिरेवं पठ्यन्ते। नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरो नमो वः। इत्येवान्तम्। आश्वलायन सूत्रे–आपस्तम्ब सूत्रे–तैत्तिरीय ब्राह्मणेषु पृथक् पृथक् विधानि मंत्राणि सन्तिविस्तरभयादत्रनोल्लिखितानि। नमो व इत्यादि नानाविध मंत्रैः पिण्डान्नमस्कृत्य–एतद्वः पितरो वासः स्वधा नम इत्यनेन पिण्डेषु वासांसि दद्यात् मंत्रास्तु नमस्काररूपा एव। अत्राह गोभिलः। गृहानवेक्षतेगृहान्नः पितरोदत्तेति–पिण्डानवेक्षते सदो वः पितरो देष्मेति। एतौ द्वौ मंत्रौ पृथगेव। गृहान्नः पितरो दत्तेत्यनेन गृहानवेक्षते पत्नीं वा–गृहाः पत्नीति तेनैवोक्तत्वात्—सदो व इत्यादिना पिण्डान वेक्षते वाजसनेयिनस्तु सदो व इत्यस्य स्थाने स तो व इति पठन्ति।

देवान्नपात्रे दत्वा संकल्पं कुर्य्यात् । ओमद्य अमुक गोत्राणां पितृ पितामह प्रपितामहानां अमुकामुक शर्म्मणां सपत्नीकानां पार्वण श्राद्ध सम्बन्धिनां विश्वेषां देवानां दत्तै तदन्न पानादिकमक्षय्य मस्तु-एवम-परञ्च माता० विश्वेदेवेभ्यः दद्यात् । अपसव्यं कृत्वा पित्र्यन्नपात्रेषु अक्षतं चारिष्ट मस्तु-इति तिलान् प्रक्षिप्य—ओमद्यामुक गोत्रस्य अस्मत्पितुः अमुक शर्म्मणः सपत्नीकस्य वसुरूपस्य दत्तै तदन्न पानादिक मक्षय्य मस्तु । एवमपराण्यपि दत्वा—सव्यं कृत्वा दक्षिणां दिशं पश्यन् सुमनाः पिण्डोपरि पूर्वाग्रां वारि दद्यात्—ॐ अघोराः पितरः सन्तु । अघोरा मातामहादयः सन्तु-ततः पूर्वाभिमुख अञ्जलिं कृत्वा शीः प्रार्थयेत् गोत्रन्नो वर्द्धतां दातारो नोभि वर्द्धन्तां वेदाः सन्तति रेव च श्रद्धाचनोमाव्यगमत् बहुदेयं नोस्तु अन्नं नो बहु भवेदतिर्थींश्च लभे महि याचितारश्च नः सन्तु माचया चष्म कश्चन एताः सत्याशिषः सन्तु । ब्राह्मणैः प्रत्युत्तरं देयं-सन्त्वेताः सत्याशिषः । ततोपसव्यं कृत्वा पिण्डोपरि सपवित्र कुशानास्तीर्थं जलधारां दद्यात—*ऊर्ज्जं वहन्तीरमृतं घृतं पयः

---

* ऊर्ज्जमित्यपोनिषञ्चति-इत्याहापस्तम्बः । ऊर्ज्जमितिप्रतीक ग्रहणेन मन्त्रो विनियुक्तः । स च-ऊर्ज्जंवहन्तिरमृतमित्यादि-अनेन मंत्रेण पिण्डमूलेषु तिलोदकनिषेचनं कार्य्यं । अस्य च व्याख्यानं हरिहरेण कृतं । अत्र सामर्थ्यादाप इत्यध्याहारः हे आपः स्वधास्थ-पितॄणां हविर्भवथ । ततश्च मम पितॄन् तर्पयत-किं कुर्वन्त्यः—ऊर्ज्जादिवहन्त्यः—ऊर्ज्जं वलं प्राणान् शक्तिंवा—अमृतं—अमृतत्व कारणं सोमरसं पीयूषं वा घृतं—आज्यं—पयः क्षीरं—कीलालं अन्नरसं परिस्रुतं सुरां । एवमनेकविधस्पृहणीयतमरसं वहन्त्यो भूत्वा पितॄणां अक्षय्यां तृप्तिं कुरुतेत्यर्थः । आपस्तम्ब गृह्येतुत्रिः पिण्डपरिषेचनं—तत्र मंत्रान्तरमुक्तम् । उत्तरयोदपात्रेण त्रिः प्रसव्यं परि सिच्येति । विष्णुनातूर्ज्जमित्यनेन मंत्रेण सोदकस्यान्नस्य पिण्डानां समन्ताद प्रदक्षिणं विकरणमुक्तं । ऊर्ज्जं वहन्तीत्यनेन सोदकेना प्रदक्षिणं पिण्डानां विकरणं कृत्वेति । मनुनातु प्रत्यवनेजनानन्तरं पिण्डानां भूमिष्ठानामेव क्रमेण वन्धाणमुक्तम् । उदकं निनयेच्छेषं शनैः पिण्डादिके पुनः । अवजिघ्रेच्चतान् पिण्डान् यथान्युप्तान् समाहितः ॥

कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन्। ततः पिण्डान्नम्रीभूयाघ्रायोत्थापयेत्। पिण्डाधार कुशानुल्मुकौ च वह्नौ क्षिपेत्। सव्यं कृत्वा देवार्घपात्रद्वयं संचाल्य। यव जलान्यादाय ओमद्य अमुक गोत्राणां पितृ पितामह प्रपितामहानां पार्वण श्राद्ध सम्बन्धिनो विश्वेदेवा कृतै तत्पार्वण श्राद्ध प्रतिष्ठार्थं हिरण्यमग्नि दैवतं तन्मूल्योपकल्पितां द्रव्य रूपां दक्षिणान्दातु महमुत्सृजे। अपरं मातामहादि सं० विश्वेदेवेभ्यो दद्यात्। अपसव्यं कृत्वा पितृपात्राण्युत्तानी कृत्य तिल जलान्यादाय ओमद्य अमुक गोत्रा अस्मत्पितृ पितामह प्रपितामहा अमुकामुक शर्म्मणः सपत्नीका वसुरुद्रादित्य रूपाः कृतैतत्पार्वण श्राद्ध प्रतिष्ठार्थ मिदं चंद्र दैवतां रजत दक्षिणां त्रेधा विभज्य ब्राह्मणेभ्योदातु महमुत्सृजे। पुनस्तिल जलान्यादाय—ओमद्य अमुक गोत्रा अस्मत् मातामह प्रमातामह वृद्ध प्रमातामहा अमुकामुक शर्म्माणः सपत्नीका वसु रुद्रादित्य रूपाः कृतै तत्पार्वण श्राद्ध प्रतिष्ठार्थ मिदं चंद्र दैवतां रजत दक्षिणां त्रेधा विभज्य ब्राह्मणेभ्योदातु महमुत्सृजे। ततस्तिलान् गृहीत्वा—वाजे वाजे वत वाजिनो नो धतेषु विप्रा अमृता ऋतज्ञाः। अस्यमध्वः पिवत मादयध्वं तृप्तायात पथिभिर्देवयानै रिति पितॄन् विसर्जयन् तिलान् क्षिपेत्। सव्येन विश्वेदेवाः प्रीयन्ता मिति विसर्जयन् यवान् क्षिपेत्। तत ॐ देवताभ्यः पि० इति त्रिर्जपित्वा ब्राह्मणा नामग्रे अत्यन्त विनीतः सन पठेत्। मंत्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः। श्राद्धं सम्पूर्णतां यातु प्रसादात् भवतां मम। सर्वं सम्पूर्णं जातमिति विप्रैर्वक्तव्यम्। ततोऽपसव्येन रक्षादीपं वामेनपाणिना निर्वाप्य सव्येनहस्तौ पादौ प्रक्षाल्याचम्य कर्म सम्पूर्णार्थं विष्णुं स्मरेत्। प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणा देवतद्विष्णोः सम्पूर्णः स्यादिति श्रुतिः। श्राद्धसंम्भाराण्याचार्याय प्रदापयेत् कृत कर्म फलावाप्तये दक्षिणाञ्च दद्यात्। इत्यपात्रक पार्वणश्राद्धप्रयोगः। शेषं प्राक् प्रदर्शितम्। ततः पञ्चवलीन्दद्यात्।

# तीर्थश्राद्धपद्धतिः ।

पद्मपुराणे—

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठ निवेशनम् ।
विकिरं तृप्ति प्रश्नं च तीर्थश्राद्धे विवर्जयेत् ॥

अत्र च श्राद्धे क्रियमाणे ब्राह्मणानां पुरतः पिण्डदानकर्त्तव्यतोक्ता प्रभासखण्डे—

तेषां पुरः प्रकर्त्तव्यं पिण्डदानं विधानतः ।

ब्रह्मवैवर्त्ते—

स्नात्वा तीर्थे महात्मानः पितॄणां पिण्ड पातनम् ।
ये कुर्वंति पितॄन् सर्वान् निरयादुद्धरन्ति ते ॥

प्रभासखण्डे—

आमंत्र्य पूर्वदिवसे निरीहा अपि ये द्विजाः ।
अलोलुपाः व्याधिहीना नतु ये ग्रामयाजिनः ॥

एवम्विधानां ब्राह्मणानां तत्तीर्थनिवासिनामेव लाभे सतीदं वेदितव्यमलाभेत्वन्ये एवम्विधा अपि प्रथमं तत्तीर्थनिवासिन एव ग्राह्यास्ततोऽन्ये ।

इत्यादि वचनात् गयादि तीर्थे ग्रहणे च पिण्डदान मेव श्राद्धत्वेनोपदिश्यते । अतस्तत् क्रमेणैवायं विधि लिख्यते—

अथ यात्रागतोनरः सत्यवकाशे शास्त्रज्ञान् दोषवर्जितान् ब्राह्मणान् पूर्वेद्यु र्निमंत्र्य । असति तु तस्मिन् तदानीमेवाहूयेति वेदितव्यम् ।

ततस्तीर्थे स्नात्वा नित्यकर्म निर्वर्त्य श्राद्धदेशमागत्य रक्षादीपं निधाय । प्राङ्मुखोपविश्याचम्य पवित्रेस्थो इति मंत्रेण पवित्र धारणं कृत्वा प्राणानायम्य पठेत् श्राद्धारम्भे गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । स्वपितॄन् मनसाध्यात्वा ततः श्राद्धं समाचरेत् ।

सप्तव्याधा दशारण्ये मृगाः कालञ्जरे गिरौ ।
चक्रवाका सरद्वीपे हंसाः सरसि मानसे ॥
तेपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घ मध्वानं यूयं किमवसीदथ ॥

ततस्तिलान् सर्षपान् विकिरेत् ।

ॐ नमो नमस्ते गोविन्द पुराण पुरुषोत्तम ।
इदं श्राद्धं हृषीकेश रक्षतां सर्वतोदिशः ॥

ॐ प्राच्यैनम अवाच्यैनम प्रतीच्यैनम उदीच्यै नमः । ॐ अपहता असुरा रक्षा ँसि वेदिषद इति सर्वदिक्षु विकीर्य्य । यव पुष्पैः श्राद्ध भूम्यैनम इति भूमिं त्रिः सम्पूज्य । श्राद्ध सम्भारानात्मानं च अपवित्रः पवि० । ॐ पुण्डरीकाक्षः पुनातु । इति सिञ्चेत् । ततः कुश तिल जलान्यादाय । ओमद्य अमुक गोत्र अमुक शर्माहं अ० गोत्राणां पितृ पितामह प्रपितामहानां तथा अ० गोत्राणां मातृ पितामही प्रपितामहीनां तथा अ० गोत्राणां मातामह प्रमातामह वृद्धप्रमातामहानां अमुकामुक शर्मणां सपत्नीकानां अमुक गोत्राणां पितृव्यादि समस्त पितॄणां मोक्षार्थं पुनरावृत्तिरहित शाश्वत तृप्त्यर्थ मात्मना सहैकोत्तर शतकुलोद्धारणार्थं अमुक तीर्थे पिण्डदानं करिष्ये । इति संकल्प्य ॐ देवताभ्यः पितृभ्यश्च महा योगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव नमोनमः । इति त्रिर्जपेत् ततोपसव्यं कृत्वा । दक्षिणामुखः । पातित वाम जानुः । द्विर्वालुकावेदीं निर्माय । अपहतेति रेखां कृत्वा ॐ ये रूपाणीत्यङ्गारं भ्राम्य दक्षिणतो निदध्यात् छिन्नमूल कुशानास्तीर्य सव्यं कृत्वा देवताभ्य० इति त्रिर्जपित्वापसव्यो भूत्वा पुटकेषु जल तिल गन्ध पुष्पाणि प्रक्षिप्य मोटक तिल जलान्यादाय । ओमद्य अमुक गोत्राः पितृ पितामह प्रपितामहा अमुकामुक शर्म्माण अमुक तीर्थ श्राद्धे पिण्ड स्थाने ऽत्रावने निक्ष्व वयः स्वधा नमः पुनरन्यपात्रमादाय । ओमद्य अमुक गोत्रा मातृ पितामही प्रपितामह्य अमुकामुकी देव्य अमुक तीर्थं श्राद्धे पिण्ड स्थानेऽत्रावने निक्ष्व वयः

स्वधा नमः। ततो द्वितीयवेद्याम् दद्यात् अपर पात्रमादाय। ओमद्य अमुक गोत्रा मातामह प्रमातामह वृद्धप्रमातामहा अमुकामुक शर्माण अमुक तीर्थश्राद्धे पिण्डस्थानेऽत्रावने निद्व वयः स्वधा नमः। अपर पात्रमादाय। ओमद्य अमुक गोत्रा मातामही प्रमातामही वृद्धप्रमातामह्य अमुकामुकी देव्य अमुक तीर्थश्राद्धे पिण्डस्थानेऽत्रावने निद्व वयः स्वधा नमः। ततो पूर्ववेद्यां दद्यात्। अपर पात्रमादाय। ओमद्य अमुक गोत्राः पितृव्यादि समस्त पितर अमुक तीर्थ श्राद्धे पिण्डस्थानेषु अत्रावने निद्व वयः स्वधा नमः। इत्यास्तृत दर्भमूलमध्याग्रेषु पृथक् पृथगावनेजनं दत्वा ब्राह्मणभोजनार्थ पाचितान्नेन पिण्डं कुर्यात्तदभावे तिल घृत मधु युत यव चूर्णेन वा यथा लाभेनान्नेन पिण्डं वामहस्तेनादाय दक्षिणकरे धृत्वा तिल जलान्यादाय। ओमद्य अमुक गोत्र पित अमुक शर्मन् अमुक तीर्थ श्राद्धे एषते पिण्डः स्वधा नमः। एवं पितामह प्रपितामहयोर्दत्वा। चतुर्थ पिण्डमादाय पितुः पश्चिमतो दद्यादित्यनेन ओमद्य अमुक गोत्रे मात अमुकी देवि अमुक तीर्थश्राद्धे एषते पिण्डः स्वधानमः। एवं पितामही प्रपितामह्याभ्यां दत्वा द्वितीयवेद्यां मातामहादिभ्यो दत्वा मातामह्यादिभ्योपि पृथक् पृथक् नाम गोत्रेण दत्वा पुनः प्रथमवेद्यां पितृव्यादि पितृणां तेषां पत्नीनां गुरुश्वसुरादीनां अन्येषामपि तेषामुद्धरणाय धर्म पिण्डं दद्यात् यदि नामादीनां ज्ञानं स्यात् तदा संकल्पेन यदि ज्ञानं नास्ति तदा वक्ष्यमाण मंत्रैर्दद्यादेव।

पितृवंशे मृता येच मातृवंशे तथैव च।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥
बन्धुवर्गाश्च ये केचिन्नाम गोत्र विवर्जिताः।
स्वगोत्रे परगोत्रे वा तेषां पिण्डं ददाम्यहम्॥
गुरु श्वशुर बन्धूनां ये चान्ये बान्धवा मृताः।
ये मे कुले लुप्तपिण्डाः पुत्र दार विवर्जिताः॥
क्रिया लोप गता ये च जात्यन्धाः पङ्गवस्तथा।
विरूपा आम गर्भाश्च ज्ञाताज्ञाता कुले मम॥

असंख्य यातना संस्था ये नीता यमशासकैः ।
तेषामुद्धरणर्थाय इमं पिण्डं ददाम्यहम् ॥
दिव्यान्तरिक्ष भूमिष्ठाः पितरो बान्धवादयः ।
मृता असंस्कृताये च तेषां पिण्डस्तु मुक्तये ॥
दत्वा पिण्डांश्च विधिवत् पुनर्मंत्र मिमं पठेत् ।
साक्षिणः सन्तु मे देवा ब्रह्माद्या ऋषि पुङ्गवा ।
मयेदं तीर्थमासाद्य पितॄणां निष्कृतिः कृता ।

ततः कुशमूलेकरंप्रोद्य सव्येनाचम्य देवताभ्यः पितृ० इति जप्त्वापसव्यो भूत्वा अत्र पितरो मादयध्वं यथा भागमावृषायध्वमिति वामावर्त्तेन श्वासं नियम्य । अमीमदन्त पितरो यथा भागमावृषायिषत । इति पिण्डोपरि श्वासमुत्सृजेत् ततः प्रत्यवनेजनम् । ओमद्य अमुक गोत्राः पितृ पितामह प्रपितामहा अमुक तीर्थश्राद्धे पिण्डेषु प्रत्यवनेजनं वयः स्वधा नमः । एवं मातॄणां मातामहानांस्तत्पत्नीनां पिण्डेषु प्रत्यवनेजनंदत्वा पुनरेकंपात्रमादाय ओमद्य अमुकामुक गोत्राः पितृव्यादि समस्त पितर अमुक तीर्थश्राद्धे पिण्डेषु प्रत्यवनेजनं वयः स्वधा नमः । ततो नीवीं विस्रंस्य सव्येनाचम्य हरिं स्मृत्वापसव्यो भूत्वा सूत्रमादाय । ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म-एतद्वः पितरो वासः स्वधा नमः । इति पिण्डेषु दद्यात् । तत स्तिल जलान्यादाय ओमद्य अमुकामुक गोत्राः पित्रादि समस्त पितर अमुक तीर्थश्राद्धे पिण्डेषु एतानि वासांसि वयः स्वधा नमः । सूत्र मुत्सृजेत् ततः पिण्डेषु गन्ध पुष्प धूप दीप नैवेद्य फल ताम्बूलानि प्रत्येकं पिण्डेषु दद्यात् । सव्यो भूत्वा अघोराः पितरः सन्तु । इति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वाभिमुखः कृताञ्जलिः प्रार्थयेत् । गोत्रं नो वर्द्धतां दातारो नोऽभि वर्द्धन्तां । वेदाः सन्ततिरेव च श्रद्धाचनोमाव्यगमत् । बहुदेयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्चनः

सन्तुमाचयाचष्म कंचन । एताः सत्याशिषः सन्तु । ततोपसव्यम् । पिण्डोपरि सपवित्र कुशानास्तीर्य्य ऊर्जमित्यनेन पितृतीर्थेन पिण्डेषु जलधारां दद्यात् । ततो नम्रीभूय पिण्डानाघ्रायोत्थापयेत् । पिण्डाधार कुशानुल्मुकं च वह्नौ क्षिपेत् । दक्षिणां दद्यात् । ओमद्य अमुक गोत्राणां पित्रादि समस्त पितॄणां कृतै तत् अमुक तीर्थश्राद्ध प्रतिष्ठार्थमिदं रजतं दक्षिणा द्रव्यं यथा नाम गोत्राय ब्राह्मणाय दातुमहमुत्सृजे । पुनस्तिल जलान्यादाय ओमद्य कृतस्य तीर्थ श्राद्ध कर्मणः साङ्गता सिद्ध्यर्थं इदमान्नं वा तन्मौल्योपकल्पितं द्रव्यं यथा नाम गोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे । रक्षादीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्यो भूत्वाचम्य देवताभ्यः पितृभ्यश्चेति त्रिः पठेत् । गवादि वलीन् दद्यात् । अनेन पिण्ड-दान कर्मणा श्री भगवान् पितृस्वरूपी जनार्दनः प्रीयताम् । ॐ प्रमादादिति पठेत् यस्यस्मृत्यादि पठित्वा पिण्डान् तीर्थे क्षिपेत् । इति तीर्थश्राद्धम् ।

## अथ प्रसङ्गात्संक्षेपतस्तर्पणं व्याख्यास्यामः ।

तत्र कालदेशौ तावत् । आह शातातपः—

तर्पणन्तु ततः कुर्य्यात् प्रत्यहं स्नातकोद्विजः ।

याज्ञवल्क्योपि—

स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥

व्यासः—

तर्पणं द्विविधं प्राहुर्मुनयः शंसितव्रताः ।
एकंजलेस्थितः कुर्य्यादपरन्तु स्थले स्थितः ॥

अनयोर्व्यवस्थामाह विष्णुः—

स्नातश्चार्द्रवासा देव पितृ तर्पणमम्भःस्थएव कुर्य्यात् परिवर्त्तित वासाश्च तीर्थतीरमुत्तीर्य्य ।

हारीतोऽपि—

आर्द्रवासा जले कुर्य्यात्तर्पणाचमनं जपम् ।
शुष्कवासा स्थले कुर्य्यात्तर्पणाचमनं जपम् ॥

उक्त व्यवस्थातिक्रमे दोषमाह लिखितः—

शुष्केणान्तर्जले चैव वहिरप्याद्रं वाससा ।
स्नानं दानं जपो होमो निष्फलं पितृ तर्पणम् ॥

स्नानं ब्राह्मस्नानं । अतएवाह हारीतः—

ब्राह्मं स्नानं तथा दानं देवता पितृ तर्पणम् ।
जलमध्ये तु कुर्वाणः शुष्कवस्त्रोऽति दुष्यति ॥

मार्कण्डेयः—

नार्द्रवासा स्थले स्थित्वा बुधस्तर्पण माचरेत् ।
जानुदघ्न जलस्थो वा विगलत्स्नान शाटकः ॥

मरीचिः—

स्नानाङ्ग मेव कुर्वीत तर्पणं सलिलस्थितः ।
स्नानाङ्गादि तरत् कुर्य्यान्मध्याह्ने स्थल एव तु ॥

यदा तु स्थलेस्थितस्तर्पणं कुर्य्यात तदा तर्पणोदकमुदक मध्येन क्षिपेदित्याह विष्णुः—

स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम् ॥

स्थल तर्पणमेव प्रकृत्याह गोभिलः—

नोदकेषु न पात्रेषु न क्रुद्धोनैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्नभूमौ प्रदीयते ॥

अतः स्थलस्थेन भूमावेव देयमित्यभिप्रायः ।

शङ्खोपि—

उदकेनोदकं कुर्य्यात्पितृभ्यस्तु कदाचन ।
उत्तीर्य्यतु शुचौदेशे कुर्य्यादुदक तर्पणम् ॥

अत्र विशेषमाह हारीतः—

वसित्वा वसनं शुक्लं स्थलेविस्तीर्ण वर्हिषि ।
विधिज्ञस्तर्पणं कुर्य्यान्नपात्रेतु कदाचन ॥

पात्राद्वा जलमादाय शुभेपात्रान्तरे क्षिपेत् ।
जलपूर्णेथवागर्त्ते न स्थलेषु विवर्हिषु ॥

पात्रञ्चात्र पितामहेनोक्तम्—

हेमरूप्यमयं कार्य्यं ताम्र कांस्य समुद्भवम् ।
पितॄणां तर्पणेपात्रं मृण्मयन्तु परित्यजेत् ॥

परिस्तरण विशेषो योग याज्ञवल्क्येन दर्शितः—

आवाह्य पूर्ववन्मंत्रैसंस्तीर्य च कुशान् शुभान् ।
प्रागग्रेषु सुरान् सम्यग्दक्षिणाग्रेषु वै पितॄन् ॥

यत्र पुनर्नैष्ठिकाचिते पितॄंस्तर्पयेदित्यादिना प्रतिविद्धमशुचिवास्थलं तत्र जलेदद्यादित्याह विष्णुः—

यत्रा शुचिः स्थलन्तुस्यादुदके देवता पितॄन् ।
तर्पयेत्तु यथा काममप्सु सर्वं प्रतिष्ठितम् ॥

यदातूदकमध्यस्थितस्तर्पणं कुर्य्यात् तदा तर्पणोदकं स्थलेन क्षिपेत् । षड्त्रिंशन्मते—

न तर्पयेत्पितॄन् देवान् जलसंस्थः स्थले क्वचित् ।
स्थलस्थस्तु क्वचित् कुर्य्यात् जलेप्य शुचिचेत्स्थलम् ॥

असंस्कृत प्रमीताञ्जलिस्तु सर्वदास्थलएव क्षेपणीय इत्याह कार्ष्णाजिनिः—

देवतानां पितॄणाश्च जले दद्याञ्जलाञ्जलिम् ।
असंस्कृत प्रमीतानां स्थले दद्याञ्जलं पुनरिति ॥

## अथ तर्पण साधनानि ।

तत्राह लौगाक्षिः—

खड्ग मौक्तिक हस्तेन कर्त्तव्यं पितृतर्पणम् ।
मणि कांचनयुक्तेन न शुद्धेन कदाचन ॥

खड्गं गण्डकास्थि । शुद्धेन केवलेन ।

योग याज्ञवल्क्यः—

अनामिका धृतं हेम तर्जन्यां रूप्य मेव च।
कनिष्ठिका धृतं खड्गं तेन पूतो भवेन्नरः ॥

कात्यायनोपि—

अशून्यन्तुकरं कृत्वा सुवर्ण रजतैः कुशैः।
प्रयतस्तर्पणं कुर्यान्मणि खड्ग तिलैरपि ॥

शङ्खोपि—

विना रूप्य सुवर्णेन बिना ताम्र तिलैस्तथा।
बिना दर्भैश्च मंत्रैश्च पितॄणां नोपपद्यते ॥
सौवर्ण राजताब्जाभ्यां खड्गेनोदुम्बरेण वा।
दत्तमक्षयतां याति पितॄणान्तु तिलोदकम् ॥
हिमेन सहयद्दत्तं क्षीरेण मधुनाथवा।
तदप्य क्षयतां याति पितॄणान्तु तिलोदकम् ॥
हिमं-कर्पूरं-चन्दनं वा।

मरीचिः—

रजते मनसा यायात् सुवर्णे हस्तनिर्गतम्।
तिलेषु च क्षणात् गच्छेत् ताम्रे तु द्विमुहूर्त्ततः ॥
दर्भे सप्त मुहूर्त्तेन मंत्रयुक्तं तदक्षयम्।
यत्र यत्र हि यो यस्य तस्य तत्रोपतिष्ठते ॥

नैतानि सुवर्णादि समुच्चयार्थानि वचनानि यदाह स एव—

एषामन्यत मेनापि युक्तपाणिः समाचरेत्।
द्वाभ्यां वाथ त्रिभिर्वापि सर्वैर्वा तर्पणं बुधः ॥

याज्ञवल्क्योपि—

तिलानामप्य लाभे तु सुवर्ण रजतान्वितम्।
तदभावे निषिञ्चेतु दर्भैं मंत्रेण वा पुनः ॥

अनेन मंत्रस्यावश्यकत्वं भवति। अतएवाह जावालिः—

सुवर्णं रजतं दर्भान् यथालाभं प्रयोजयेत्।
न मंत्रेण विना कार्यं कदाचित् तर्पणं बुधैः॥

मरीचिः—

बहुगोषु यथा नष्टां मातरं विन्दते सुतः।
मनुनायस्य यद्दत्तं तद्धि तस्योपतिष्ठते॥

योग याज्ञवल्क्यः—

नाम गोत्र स्वधाकारै स्तर्पयेदनुपूर्वशः।
मंत्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनम्॥

गौतमः—

कुशानामप्य लाभे तु काशान्दूर्वामथापि वा।
संयोज्य तर्पणं कुर्यान्नतु शून्यकरः क्वचित्॥

अत्र विशेषमाह प्रजापतिः—

तर्पणादीनि कार्य्याणि पितॄणां यानिकानिचित्।
तानिस्यु द्विगुणैर्दर्भैः सपवित्रैर्विशेषतः॥

भृगुः—

प्रागग्रैस्तर्पये द्देवानुदगग्रैस्तु मानुषान्।
तानेव द्विगुणी कृत्य तर्पयेत् प्रयतः पितॄन्॥

तानेवेति देव तर्पण विनियुक्तानामपि तेषां पितृ तर्पण योग्यते त्युक्तम्।

तथाच गृह्य परिशिष्टे—

दर्भाः कृष्णाजिनं मंत्रा ब्राह्मणा हविरग्नयः।
अयातया मान्येतानि नियोज्यानि पुनः पुनः॥

छागलेयः—

लघु पात्रं करे कृत्वा सौवर्णं खड्गमेव च।
राजतं ताम्रजं वापि तेन सन्तर्पयेत् पितॄन्॥

शङ्खः—

सौवर्णेन पात्रेण राजतेन औदुम्बरेण खड्गपात्रेण वा शङ्कुनाप्युदकं पितृतीर्थं स्पृशन्दद्यात्।

औदुम्बरं-ताम्रमयं-शङ्कुना-सुवर्णादि निर्म्मितया शलाकया।

कूर्म्मपुराणे—

देवान् ब्रह्मऋषींश्चैव तर्पये दक्षतोदकैः।
पितृभक्त्या तिलैः कृष्णैः स्वसूत्रोक्त विधानतः॥

मत्स्यपुराणे—

यवैस्तु तर्पयेद्देवान् मनुष्यान् सनकादिकान्।
तिलै विशेषतः कृष्णैरग्निष्वात्तादिकान् पितृन्॥
आत्मनश्चपितृन्सर्वा सुहृत्सम्बन्धिभिः सह॥

यत्तु रामायणे—

पाद शौचमनभ्यङ्गं तिलहीनं च तर्पणम्।
सर्वं तत् त्रिजटे तुभ्यं यच्च श्राद्धमदक्षिणमिति॥

तत्तिललाभेपि तद्विहीन तर्पणाभिप्रायं-अन्यथा तिलानामप्यलाभे इत्यादि वचन विरोधः स्यात्।

तिल ग्रहणे विशेषमाह मरीचिः—

मुक्तहस्तेन दातव्यं न मुद्रान्तत्र दर्शयेत्।
वामहस्ते तिला ग्राह्या मुक्तहस्तस्तु दक्षिणः॥

मुद्रा प्रदेशिन्यङ्गुष्ठाग्र संयोगः। एतदनुद्धृतोदक तर्पणाभिप्रायः।

यथा च योग याज्ञवल्क्यः—

यद्युद्धृतं निषिञ्चेत्तु तिलान्सम्मिश्रयेज्जले।
अतोन्यथा तु सव्येन तिलाग्राह्या विचक्षणैः॥

अतोऽन्यथा-अनुद्धृतोदक तर्पणम्।

तत्र जलस्थस्य विशेषमाह शालङ्कायनः—

बाहुं पूर्णं तिलैः कृत्वा जलस्थस्तर्पयेत् पितृन्।
स्थलस्थेन न कर्त्तव्यं पितृणां तृप्तिमिच्छता॥

गोभिलेन तु यदुक्तम्—

रोम संस्थान् तिलान् कृत्वा यस्तु तर्पयते पितृन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन वा ।

तत् स्थलतर्पण विषय मित्य व गन्तव्यम् । यदातुस्थलस्थोऽप्यनुद्धृतेन चोदकेन तर्पणं कुर्य्यात् तदा वामहस्तस्या लोमके प्रदेशे शाट्यां वा तिलान्निधाय तर्पणं कार्य्यम् ।

तदाह कार्ष्णाजिनिः—

रोम संस्थान् तिलान् कृत्वा तर्पयेत् पितृ देवताः ।
जले स्थले तलस्थांस्तु कृत्वा शाट्यामथापि वा ॥

क्वचित्तिलतर्पणस्यापवादमाह मरीचिः—

रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशिसन्ध्ययोः ।
विद्या पुत्र कलत्रार्थी न कुर्य्याेत्तिलतर्पणम् ॥

विशेषः स्कान्दे—

तिथि तीर्थ विशेषे च गयायां पितृपक्षके ।
निषिद्धेपि दिने कुर्य्यान्नदोषोतिलतर्पणे ॥

अथाञ्जलि सङ्ख्या ।

तत्राह व्यासः—

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितर स्त्रीं स्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम् ॥

आह सत्यतपाः—

देव पितृ मनुष्यादि स्वशाखा विधि चोदिताम् ।
एकैकाञ्जलिना तृप्तिं प्रथमान्तेन वाचयेत् ॥

विष्णुपुराणे—

त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत् ।
तथर्षीणां यथा न्यायं सकृद्वापि प्रजापतिः ॥
पितृणां प्रीणनार्थाय त्रिरपः पृथिवीपते ॥

अपवर्जयेत्—दद्यात् ।

ब्रह्माण्डपुराणे—

अञ्जलि द्वितयं दद्याद्देवान् संतर्पयन् बुधः ।
ऋषीणाञ्च मनुष्याणां सकृदेव प्रदापयेत् ॥
त्रिस्त्रिः पितृभ्यो दद्यात्तु स्त्रीणान्तु सकृदेवहि ।
द्वौ द्वौ माता महानांच मातुलानां सकृत्तथा ॥
गुर्व्वाचार्य्य श्वशुराणां सुहृत् सम्बन्धिनां सकृत् ॥

स्कान्दे मात्रादिभ्यो विशेषमुक्तम्—

मातृ मुख्याश्च या स्तिस्रो मातामह्यादयश्चयाः ।
अञ्जलित्रय मे तासामन्यत्रैकैकमञ्जलिम् ॥

वौधायनः—

जलांजलित्रयं देयं येचान्ये संस्कृताभुवि ।
असंस्कृत प्रमीतानामेकमेवा वटेक्षिपेत् ॥

अत्र यथास्व शाखं व्यवस्था वेदितव्या । येषान्तु शाखिनामनाम्नातं तेषां विकल्प इति ।

## अथ तर्पणीयगणक्रमः ।

तत्र छागलेयः—

देवान् देवगणांश्चैव मुनीन्मुनिगणानपि ।
पितॄन् पितृगणांश्चैव नित्यं संतर्पयेत्ततः ॥

शातातपः—

देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथा क्रमम् ।

स्कन्दपुराणे—

पूर्वं मोद प्रमोदादीन् तर्पयेत् षड् विनायकान् ।
ततो ब्रह्मादयो देवा स्तर्पणीया महामते ॥
ततश्च सनकादीनां प्रयतस्तृप्ति माचरेत् ।
अग्निष्वात्तादि कानान्तु पितॄणामप्यनुक्रमात् ॥

यमाय धर्मराजाय कुर्यात् सन्तर्पणं ततः ।
पितॄणामथमातॄणां ततो मातामहस्य च ॥
पत्नी श्वशुर बन्धूनां सुत सम्बन्धिनां ततः ॥

सत्यव्रतः—

पूर्वं स्वपितरस्तर्प्याः पश्चादन्यांश्च तर्पयेत् ।
पितृभ्यः प्रत्यहं दद्यात् ततोमातृभ्य एव च ॥
ततो मातामहानां च पितृव्यस्य सुतस्य च ।
सुहृत्सम्बन्धि बन्धूनां ततः कुर्य्यात्तु तर्पणम् ॥

यमः—

सपिण्डानाञ्च बन्धूनां कृत्वादावुदकक्रियाम् ।
सुहृत्सम्बन्धि वर्गाणां ततो दद्याज्जलाञ्जलिम् ॥

शङ्खः—

आसप्तमात् पुरुषात्—पितृपक्षे यावतान्तु नाम जानीयात् तावतां पितृपक्षाणामुदकतर्पणं कृत्वा गुरूणां कुर्य्यात् । गुरूणां कृत्वा मातृपक्षाणां कुर्य्यात् मातृपक्षाणां कृत्वा तत्सम्बन्धि बान्धवानां कुर्य्यात् तेषां कृत्वा सुहृदां कुर्य्यादिति ।

इति तर्पणीयगणक्रमः ।

अथ हस्त-तीर्थोपवीत-जानु-दिङ् नियमाः ।

तत्र यमः—

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोश्रृङ्गमात्रमुद्धृत्य जलमध्ये जलंक्षिपेत् ॥

तथाच कार्ष्णाजिनिः—

श्राद्धे विवाहकाले च पाणिनैकेन दीयते ।
तर्पणन्तु भवेन्नैवं विधिरेष पुरातनः ॥

अतएव भविष्यत्पुराणे—

उभाभ्यामथ हस्ताभ्यामावध्याञ्जलिमादरात्
देवान् ऋषीन् मनुष्यांश्च पितॄंश्चैवाभि तर्पयेत् ॥

मत्स्यपुराणे—

उभयोर्हस्तयोः कृत्वा सलिलैः पूर्णमंजलिम् ।
देवानां च पितॄणां च शुचिस्तर्पणमाचरेत् ॥

अत्र विशेषमाह योग याज्ञवल्क्यः—

उभाभ्यामथ हस्ताभ्यामपराजित दिङ्मुखः ।
सम्वृताङ्गुष्ठ काभ्यान्तु सव्योपग्रह मेव वा ॥
प्रक्षिपेत्तोयमिति शेषः ।

वायुपुराणे—

उभाभ्यामथ हस्ताभ्यां पितॄन्देवांश्च तर्पयेत् ।
सव्योपग्रह युक्तेन दक्षिणे नैव वा पुनः ।

वसिष्ठः—

एकेन वा हस्तेन कुर्य्याद्देव पितृ तर्पण सव्यारब्धेनोभाभ्यां वेति ।
सव्यारब्धेन दक्षिणपाणिना सहाञ्जलेर्विकल्पः ।

विष्णुपुराणे—

शुचिवस्त्रधरः स्नातो देवर्षि पितृ तर्पणम् ।
तेषामेवहि तीर्थेन कुर्वीत सुसमाहितः ॥

नरसिंहपुराणे—

देवतीर्थेन कुर्वीत देवानां तर्पणं सदा ।
सनकादि मनुष्याणां ऋषीणमपि सर्वशः ॥
प्राजापत्येन सिञ्चेत्तु सलिलं श्रद्धया शुचिः ।
पितृतीर्थेन कर्त्तव्यं पितॄणां तर्पणं बुधैः ॥
अन्यथा तर्पणं कुर्वन्नेनसायुज्य ते नरः ॥

तीर्थलक्षणमुक्तं योग याज्ञवल्क्येन—

पञ्चतीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यञ्च सौमिकम् ।।
अङ्गुष्ठमूले ब्राह्मन्तु दैवं ह्यङ्गुलि मूर्द्धनि ।
प्राजापत्यन्तु मूलेषु मध्ये सौम्यं प्रतिष्ठितम् ॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्त्तितम् ।
एवं ज्ञात्वान मुह्यन्ति सर्व कर्म सु वै द्विजाः ।।

हारीतेन तु । मध्ये आग्नेय मुक्तं—

अङ्गुष्ठ स्योत्तरतो रेखा ब्राह्मंतीर्थं कनिष्ठिकायाः पश्चात् प्राजापत्यं अग्रेऽङ्गुलीनां दैवं अऽङ्गुष्ठ प्रदेशिन्योरन्तरा पित्र्यं मध्ये आग्नेयं । क्षुत निष्ठीविताशतपीतलीढेषु मूत्रपुरीषयोर्दर्शनोत्सर्गे स्त्री शूद्रोच्छिष्टाभि भाषणे देवतामभि गन्तु कामोऽध्येष्यमाणो वा ब्राह्मेण तीर्थेना चामेत् । आवपन होम तर्पणानि प्राजापत्येन कुर्य्यान्मार्जनार्चन बलिकर्म भोजनानि दैवेन पित्रार्थान् पित्र्येण प्रतिग्रहमाग्नेये नेति ।

जमदग्निः—

यज्ञोपवीती देवेभ्यः प्रदद्यात्सलिलाञ्जलिम् ।
निवीतीतु मनुष्याणां कुर्य्यात्तर्पण मादृतः ।।
प्राचीनावीत संयुक्तः पितृभ्यो निर्वपेज्जलम् ।।

यज्ञोपवीतादि लक्षणमाह भरद्वाजः—

दक्षिणं बाहुमुद्धृत्य वामस्कन्धे निवेशितम् ।
यज्ञोपवीत मित्युक्तं दैवकार्य्येषु शस्यते ।।
कण्ठावलम्बितञ्चैव ब्रह्मसूत्रं यदा भवेत् ।
सन्निवीत मितिख्यातं शस्तं कर्मणि मानुषे ।।
उत् क्षिप्ते वामबाहौ च दक्षिणस्कन्धमाश्रितम् ।
प्राचीनावीत मित्याहुस्तत् पित्र्येष्वेव कर्मसु ।।

सत्यव्रतः—

कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ब्रह्मपुत्रानृषींस्तथा ।।

अपसव्यं ततः कुर्य्यात् सव्यं जान्वाच्यभूतले ।
दर्भपाणिस्तु विधिना प्रेतान्संतर्पयेत्ततः ।।
पित्रादीन्नाम गोत्रेण ततो मातामहानपि ।।

गोभिलः—

देवं संतर्पयन् प्राज्ञो दक्षिणंजानुभूतले ।
निदध्यादथ वामन्तु पितॄनपि विचक्षणः ।।
मनुष्य तर्पणं कुर्वन्नकिञ्चिज्जानु पातयेत् ।।

ब्रह्मवैवर्त्ते—

पूर्व्वाशाभिमुखोभूत्वा पूर्वाग्रेषु कुशेषु च ।
अपोनिषिञ्चेत् प्रयतो देवानुद्दिश्य धर्मवित् ।।
सौम्याशाभिमुखो नित्य मुदगग्रे च वर्हिषि ।
मनुष्याणां च तृप्त्यर्थं निर्वपेत्तु जलाञ्जलिम् ।।
यमाशा सन्मुखः स्थित्वा दक्षिणाग्र कुशेषु च ।
पितृभ्यः सलिलं दद्यात्तृप्त्यर्थं प्रीतमानसः ।।

अत्र विशेषमाह विश्वामित्रः—

उभाभ्यामथ हस्ताभ्यामपराजित दिङ्मुखः ।
आदाय सलिलं सम्यगृषीन् देवांश्च तर्पयेत् ।।
आग्नेयीमथ वायाभ्यां प्रेक्षमाणो दिशं नरः ।
दद्यात्पितॄन् समुद्दिश्य त्रीं स्त्रीनथ जलांजलिम् ।।

नन्दिपुराणे—

ऐन्द्री दिगाभिमुख्येन त्रिदशानान्तु तर्पणम् ।
ऐशान्यामथ कौवेर्य्यां ब्रह्मपुत्रांश्च तर्पयेत् ।।
दक्षिणस्यान्तु काष्ठायां विधेयं पितृ तर्पणम् ।।

इति हस्ततीर्थोपवीत जानुदिङ् नियमाः ।।

अथ प्रत्येकतर्पणीयदेवादिनिरूपणम् ।

भविष्यत्पुराणे—

प्रथमं तर्पयेद्देवानुपवीती विनायकान् ।
मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥
अविघ्नो विघ्नकर्त्ता च इत्येते षड् विनायकाः ॥

योग याज्ञवल्क्यः—

ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम् ।
देवान् छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान् ॥
आचार्य्यांश्चैव गन्धर्वानाचार्या नितरांस्तथा ।
सम्वत्सरं सावयवं देवीरप्सरसस्तथा ॥
तथा देवानुगान्नागान्सागरान्पर्वतानपि ।
सरितोथ मनुष्यांश्च यक्षान् रक्षांसि चैव हि ॥
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ।
वनस्पतीनोषधींश्च भूतग्रामश्चतुर्विधम् ॥

अत्र शौनकोक्ता देवर्षिगणाः पैठीनसि ऋषिमन्वादिगणाश्च विस्तरभयादस्माकं सूत्रादनुपयोगित्वाच्चन लिखिताः।

तदाह संवर्त्तः—

निवीतन्तु ततः कृत्वा यज्ञसूत्रमुदङ्मुखः ।
प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक् ॥
एवं देवान् ऋषींश्चैव तर्पयित्वाथ भक्तितः ।
मनुष्यान् ब्रह्मपुत्रांस्तु निवीती तर्पयेदृषीन् ॥
सनकश्च सनंदश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
एते ब्रह्मसुताः सप्तमनुष्याः परिकीर्त्तिताः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥
प्रचेताश्च वसिष्ठश्च भृगुर्नारद एवच ।
देव ब्रह्म ऋषीनेतां स्तर्पयेदक्षतोदकैः ॥

अथ प्राचीनावीती दक्षिणामुखोऽन्वाचित सव्यजानुर्दक्षिणाग्रेषु कुशेषु द्विगुणीकृतैः कुशैः पितृतीर्थेन कुशतिल मिश्रैरुदकैः पितृ तर्पणमारभेत् ।

आह योग याज्ञवल्क्यः—

आवाह्य पूर्ववन्मंत्रैरास्तीर्य च कुशान् शुभान् ।
सव्यंजानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ॥
तल्लिङ्गै स्तर्पयेन्मंत्रैः सर्वान् पितृगणांस्तथा ।
प्राचीनावीती उदकं प्रसिञ्चेद्वै तिलान्वितम् ॥
कव्यवाहनलं सोमं यममर्यमणं तथा ।
अग्निष्वात्तान् सोमपांश्च तथा वर्हिषदः पितृन् ॥
यदिस्याज्जीव पितृक एतान् दिव्यान् पितृंस्तथा ।
येभ्यो वापि पितादद्यात्तेभ्यो वापि प्रदापयेत् ॥
एतांश्च वक्ष्यमाणांश्च प्रमीत पितृको द्विजः ।
वसून् रुद्रांस्तथादित्यान् नमस्कार स्वधान्वितान् ॥
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ।
आचार्यांश्च पितृन्स्वांश्च तर्पयेत् प्रतिनामतः ॥

यदि जीव पितृकस्तर्पणं कुर्यात् तदा देव ऋषि मनुष्य तर्पणानन्तरं कव्यवाहप्रभृतीनष्टौ देवपितृन् सन्तर्प्य तर्पणं समापयेत्। येभ्यः पिता दद्यात् तेभ्यो वापि तर्पणं कुर्यात् । प्रमीत पितृकस्त्वेतान् कव्यवाह प्रभृतीन् वक्ष्यमाणान् वसून् रुद्रादित्यान् स्वान् पितृ पितामहादींश्च तर्पयेत् ।

पितृ तर्पणं प्रकृत्याह पैठीनसिः—

अपसव्यं ततः कृत्वा स्थित्वा च पितृदिङ्मुखः ।
पितृन् दिव्यानदिव्यांश्च पितृतीर्थेन तर्पयेत् ।

दिव्याः—वस्वादयः । अदिव्याः—स्वपित्रादयः ।

ते च दिव्यास्ते नैव दर्शिता:—

ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलोनलः ।
प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥
अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ॥
इन्द्रोधाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा ।
अत्रिर्विवस्वांस्त्वष्टा च सविता विष्णु रेव च ।
एतेवै द्वादशादित्या देवानां प्रवरा मताः ॥
एते च दिव्याः पितरः पूज्याः सर्वैः प्रयत्नत इति ॥

जैमिनि:—

दिव्यान् पितॄंश्च सन्तर्प्य स्वपितॄनथ तर्पयेदिति ।

जावालि:—

स्वपित्रादीनथ ध्यायन् दक्षिणाभिमुखः स्थितः ।
तर्पयेदथ मात्रादीन् मातामहगणांस्तथा ॥
आचार्यांश्च पितृव्यांश्च बन्धूनन्यांश्च तर्पयेत् ।
सुहृत् सम्बन्धिनश्चान्यान् याज्य शिष्यर्त्विजोऽपि च ॥

इति तर्पणीय देवादि निरूपणम् ।

अथ तर्पणेति कर्त्तव्यता ।

आह योग याज्ञवल्क्य:—

अन्वारब्धेन सव्येन पाणिनादक्षिणेन तु ।
तृप्यतामिति सेक्तव्यं नाम्नातु प्रणवादिना ॥

तृप्यतामित्यत्र–प्रणवादि प्रथमान्तं नाम संकीर्त्य तदन्ते तृप्यतामिति वक्तव्यं–इति प्रयोगं दर्शितवान् ।

जातूकर्ण्यस्तु परस्मैपदेनापि प्रयोगं दर्शितवान्—

तृप्यत्विति समुच्चार्य्य तृप्यतामित्यथापि वा ।
विधिज्ञः प्रक्षिपेत्तोयं देवादीनामशेषतः ॥

देवादीनां–देवर्षि, मनुष्य, पितॄणाम् ।

कात्यायनस्तु उत्तम पुरुषान्तस्याख्यान पदस्य प्रयोग मुक्तवान्—

अथाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनपि ।
नामान्ते तर्पयामीति आदावो मिति च ब्रुवन् ।।

कूर्म्मपुराणे—

ततः सन्तर्पयेद्देवान् पितॄनृषिगणांस्तथा ।
आदावोङ्कारमुच्चार्य्य नमोन्ते तर्पयामि चेति ।।

तर्पयामीत्यत्र तर्पणीयस्य कर्म्मत्वेनाभिसम्बन्धात् प्रणवादि देवता नाम द्वितीयान्तमुच्चार्य्य तर्पयामि नमः। इत्यन्ते समुच्चारयेत्। ततश्च—ॐ ब्रह्मा तृप्यतां वा ॐ ब्रह्मा तृप्यतु वा ॐ ब्रह्माणं तर्पयामि नम इति एकवचनेन। ॐ वेदास्तृप्यन्तां–ॐ वेदास्तृप्यन्तु–ॐ वेदांस्तर्पयामि नम इति वा बहुवचनेन प्रयोगः कर्त्तव्य इत्युक्तं भवति। अत्र यथा शाखं व्यवस्था। अतः स्वाचारोऽनुसर्त्तव्यः।

अत्र वस्वादि तर्पणे विशेषमाह कश्यपः—

वसून् रुद्रान् तथादित्यान् नमस्कार समन्वितान् ।
अद्भिः सन्तर्पयेन्नित्यं नामभिः प्रणवादिभिः ।।
तर्पयन् यमराजं च नमस्कारं प्रकीर्त्तयेत् ।।

अत्र स्मृतिचन्द्रिकाकारादिभिः-ॐ ध्रुवाय नमः इत्येवं प्रयोगो दर्शितः। अन्येतु वाक्यपरिपूर्त्तये ॐ ध्रुवं तर्पयामि नमः—इति प्रयोग माहुः। यम तर्पणेतु स्मृति वचनस्य चतुर्थ्यन्त नमोन्त नामानुकीर्त्तनात् ॐ यमाय नमः–इत्यादय एव प्रयोगा विधेयाः।

तथाच छागलेयः—

यमाय धर्म्मराय इत्यनुकीर्त्तयन् यमं सन्तर्पयन् नरकं नैव पश्यतीति।

ऋष्य श्रृङ्गेण तु पितृ तर्पणे मध्यमपुरुषान्तस्यापि पदस्य प्रयोगो दर्शितः—

पित्रादिभ्योऽञ्जलिन्दद्यात् जपन्मंत्रान् यथाविधि ।
तृप्यध्वमिति च त्रिस्त्रैं ततो मातृभ्य एव च ।।

पैठीनसि:—

सनाम गोत्र ग्रहणं पुरुषं पुरुषं प्रति ।
तिलोदकांजलीं स्त्रीं स्त्रीन् उच्चै रुच्चैर्विनिक्षिपेत् ।।

उच्चैरुच्चैरिति–पितुरञ्जलिभ्य: पितामहाञ्जलय: किञ्चिदुच्चैरुत्क्षिप्त पाणिना देया: । ततोपि प्रपितामहाञ्जलय इति व्याख्यातम् ।

योग याज्ञवल्क्य:—

सवर्णेभ्यो जलं देयं ना सवर्णेभ्य एव च ।
गोत्र नाम स्वधाकारै स्तर्पयेदनुपूर्वश: ।।

नामादि ग्रहणेपि विशेषमाह बौधायन:—

शर्म्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्र जन्मन: ।।
चतुर्णामपि वर्णानां पितॄणां पितृगोत्रता ।
पितृगोत्रं कुमारीणामूढानां भर्तृ गोत्रता ।।

योग याज्ञवल्क्य:—

मंत्रैश्च देयमुदकं पितॄणां प्रीति वर्द्धनैरिति ।।

ते च मंत्रास्ते नैव दर्शिता: । उदीरतामङ्गिरस आयन्त्वित्यूर्ज्जमित्यपि पितृभ्य इति येचेह मधुवाता इतित्यृचम्—

पितॄन् ध्यायन् प्रसिञ्चे द्वै जपन्मंत्रानिमान् क्रमात् ।।

अस्यार्थ: । उदीरतामिति मंत्रान्ते अमुक गोत्र: अस्मत् पिता अमुक शर्मा वसुरूप: तृप्यध्वं वा तृप्यतां स्वधा इति प्रथमं तिलाञ्जलिं दद्यात् । ततश्चाङ्गिरसेन पूर्ववत् द्वितीयं तत आयन्तु न इति मंत्रेण तृतीयं इत्येवं पित्रेऽञ्जलित्रयं दद्यात् । तत ऊर्ज्जमिति मंत्रेण प्रथमं–पितृभ्य: स्वधेति द्वितीयं ये चेह पितर इति तृतीयं एवं पितामहायाञ्जलि त्रयं दद्यात् । मधुवाता इति मंत्रान्ते प्रथमं–मधुनक्त मिति द्वितीयं–मधुमान्न इति तृतीयं इत्येवं प्रपितामहायाञ्जलित्रयं दद्यात् । अत्रावसरे प्रथमं मात्रादीनां तर्पणं ततो मातामहादीनाम् ।

व्यासः—

पूर्वं पित्रादयस्तर्प्या स्ततो मात्रादयोऽपि च ।
ततो मातामहाश्चैव मातामह्यस्ततः परमिति ॥

परमित्यनेन पूर्वोक्ताः क्रमप्राप्तास्तर्पणीय पितृव्यादयः । एवं मातृ तर्पणानन्तरं मातामहादिभ्यः पृथक् पृथगञ्जलित्रयं दद्यात्—मंत्रस्तु नमो व इत्येक एव पुनः पुनरावर्त्तते । ततो मातामह्यादींस्तर्पयित्वा स्वपत्नीन् तर्पयेत् तदनन्तरं पितृव्यादींस्तर्पयेत् ।

तदुक्तं गरुड़पुराणे—

अथ मातामहीनाञ्च स्वपत्नीना मनन्तरम् ।
तर्पणञ्च पितृव्याणां तत्पत्नीभ्यस्ततोपि च ॥
पितृ स्वसुश्च तद्भर्तुर्मातुलस्यापि नित्यशः ।
मातुलान्यास्ततो मातृ स्वसुस्तत्पत्यु रेव च ॥
श्वशुरस्य च कर्त्तव्यं श्वश्रूणामपि तर्पणम् ।
आचार्य्याणां ततः कुर्य्यादाचार्य्याणीभ्य एव च ॥
बन्धूनां भ्रातृपत्नीनां पुत्रं चैव स्नुषामपि ।
पुत्रीं तस्याः पतिं चैव भगिनीं तत्पतिं तथा ॥
भागिनेयं च पौत्रं च दौहित्रं याज्य मृत्विजम् ।
शिष्यं मित्रं च सन्तर्प्य तत्पत्नीस्तु तथैव च ॥
अन्येषामपि दातव्यं येभ्योऽयं दातु मिच्छति ।
दद्यात्तीर्थे विशेषेण धर्म्मं परममास्थितः ॥

वाराहपुराणे—

प्रेतेभ्यस्तु पृथक् दद्यान्मनसा तत्परः स्मरन् ।
आत्मनोपि जलं दद्यादिति द्वैपायनो ब्रवीत् ॥

अत्रावसानाञ्जलिमाह कात्यायनः—

पितृवंश्या मातृवंश्या येचान्ये मत्त उदकमिच्छन्तितांस्तर्पयामी-त्यन्तेन तिलाञ्जलिं दद्यात् ।

ब्रह्मवैवर्त्तेत्वेवमवसानाञ्जलिः--

यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
तेषां हि दत्त मक्षय्य मिदमस्तु तिलोदकम् ।।
येमे कुले लुप्तपिण्डाः पुत्रदार विवर्जिताः ।
तेषां हि दत्त मक्षय्य मिदमस्तु तिलोदकम् ।।
मातृवंश्या मृता ये च पितृवंश्यास्तथैव च ।
तेषांहि दत्तमक्षय्य मिदमस्तु तिलोदकम् ।।
इत्युच्चार्य्य ततो दद्यात् सलिले सलिलांजलिमिति ।।

कामोदकाख्यमन्यमप्यञ्जलिं दद्यात् ।

तदुक्तं विष्णुपुराणे--

इदञ्चापि जपेदम्बु ददेदात्मेच्छया नृप ।
उपकाराय भूतानां कृत देवादि तर्पणः ।।
देवा सुरास्तथा यक्षा गन्धर्वो रगराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्त रवः खगाः ।।
जलेचरा भू निलया वाय्वा धाराश्च जन्तवः ।
तृप्तिमेते नयान्त्वाशु मद्दत्तेनाम्बुनाखिलाम् ।।
नरकेषु समस्तेषु यातनासु च ये गताः ।
तेषा माप्यायनायैव दीयते सलिलं मया ।।
येऽवान्धवा बान्धवा वा येऽन्य जन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु यश्चामत्तोऽभि वांछतीति ।।

विस्तरा समर्थस्तु सङ्क्षिप्तं मत्स्यपुराणोक्त प्रकारेण तर्पणं कुर्य्यात्—

देवायक्षास्तथानागा गन्धर्वाप्सरसोऽसुराः ।
सर्पाः क्रूराः सुपर्णाश्च तरवो जृम्भकाः खगाः ।।
वाय्वाधारा जलाधारास्तथैवाकाशगामिनः ।
निराधाराश्च ये जीवा ये च धर्मरतास्तथा ।।

कृतोपवीती दत्वैवं निवीती च भवेत्ततः ।
सनकश्च सनंदश्च तृतीयश्च सनातनः ।।
कपिलश्चासुरिश्चैव वोढुः पंचशिखस्तथा ।
सर्वे ते तृप्ति मायान्तु मद्दत्तेनाम्बुनाखिलाम् ।।
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
प्राचेतसं वसिष्ठञ्च भृगुं नारद मेव च ।।
देव ब्रह्म ऋषीन्सर्वान् तर्पयाम्यक्षतोदकैः ।
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।।
अग्निष्वात्तास्तथा सौम्या हविष्मन्तस्तथोष्मपाः ।
विकालिनो वर्हिषदस्तथान्ये कामचारिणः ।।
तर्पयामि पितॄन् भक्त्या सतिलैश्चन्दनोदकैः ।
दर्भपाणिस्तु विधिना प्रेतान् सन्तर्पयेत्ततः ।।

ततः–तदनन्तरं स्वपितॄन् मातामहादींश्च क्रम प्राप्तान् मंत्र प्रयोगादि विधिपूर्वकं तर्पयेदिति ।

विष्णुपुराणेतु अति संक्षेप तर्पणमुक्तम्—

आब्रह्मस्तम्ब पर्य्यन्तं जगत्तृप्य त्विति ब्रुवन् ।
क्षिपेत् पयोञ्जलीन् त्रींस्तु कुर्वन् संक्षेप तर्पणम् ।।

अत्रावसरे स्नान वस्त्रनिष्पीडनं कर्त्तव्यम् तदाह वसिष्ठः—

तीरे जलाशय स्यैवं निर्वर्त्त्य पितृ तर्पणम् ।
निष्पीडयेत् स्नान वस्त्रं दक्षिणाभिमुखः स्थले ।।

अतो मध्याह्न स्नाने जलमध्यस्थितः स्नानाङ्गतर्पणं कृत्वा वहिर्निर्गतो वस्त्रं निष्पीड्यै वाचमनं कुर्य्यात् वस्त्रनिष्पीडनं तु स्थल तर्पणानन्तरं कुर्य्यात् ।

तदुक्तं ब्रह्माण्डपुराणे—

ततः स्नात्वा विधानेन सन्तर्प्य पितृ देवताः ।
जलाशयाद्विनिर्गत्य द्विराचामेत्समाहितः ।।

स्नान वस्त्रमनिष्पीड्य स्थाप्यमास्थल तर्पणात् ।
स्थलेऽपि तर्पणं कृत्वा ततो वस्त्रं निपीडयेत् ।।
तदनुद्भिरुपस्पृश्य सूर्य्यायार्घ्यं प्रदापयेत् ।
ततो देवार्चनं कुर्य्यादेष माध्याह्निको विधिः ।।

एवं कुर्वतः फलमाह शङ्खः—

स्नातः सन्तर्पणं कृत्वा पितृणान्तु तिलोदकैः ।
पितृलोक मवाप्नोति प्रीणाति च तथा पितॄन् ।।

मनु शातातप योग याज्ञवल्क्याः—

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञ क्रिया फलम् ।।

अत्र पितृगाथासु यमः—

अपिनः सकुले भूयात् योनो दद्यात् जलांजलीन् ।
नदीषु बहुतोया सु शीतला सु विशेषतः ।।

विष्णुः—

कुलेऽस्माकं सजन्तुः स्यात् योनोदद्याञ्जलाञ्जलीन् ।
नदीषु बहुतोया सु शीतला सु विशेषतः ।।

तर्पणाकरणे दोष उक्तो ब्रह्मवैवर्त्ते—

देवतांश्च मुनींश्चैव पितॄन्वै योन तर्पयेत् ।
देवादीनामृणीभूत्वा नरकं सव्रजत्यधः ।।

हारीतः—

नस्रवन्तीं वृथा क्रामे देवं ह्याह पितामहः ।
देवाश्च पितरश्चैव काङ्क्षन्ति सरितं प्रति ।।
अदत्ते तु निराशास्ते प्रतियान्ति यथा गतम् ।।

पराशर शातातपौ—

ब्राह्मणं स्नातु मायान्त मनु गच्छन्ति देवताः ।
पितरश्च महाभागा वायु भूता जलार्थिनः ।।
अप्रदत्ते जलेशप्त्वा निराशाः प्रतियान्ति ते ।।

कात्यायनोऽपि—

छायां यथेच्छेच्छरदातपार्त्तः
पयः पिपासुः क्षुधितोऽलमन्नम् ।
बालो जनित्रीं जननी च बालं
योषित् पुमांसं पुरुषश्च योषाम् ।।
तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
विप्रादुदकमिच्छन्ति सर्वेऽभ्युदय काङ्क्षिणः ।।
तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा ।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतत् विभर्त्ति हि ।।

कूर्मपुराणे—

एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ।
स गच्छेत् परमं स्थानं तेजोमूर्त्तिरनामय इति ।।

इति तर्पणेति कर्त्तव्यता ।

## अथ यमभीष्मतर्पणे ।

तत्र स्कन्दपुराणे—

कृष्णपक्षे चतुर्दश्यामङ्गारकदिनं यदा ।
तदास्नात्वा शुभे तोये तर्पयेत् यमनामभिः ।।

तत्राह वृद्धमनुः—

यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनां वा विशेषेण ब्राह्मणो नियतेन्द्रियः ।।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ।।

औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
इत्येतैर्नाम मंत्रैश्च प्रणवादि नमोन्तकैः ।
तर्पयित्वा यमं देवं सर्वपापैः प्रमुच्यते ॥

अत्र ॐ यमाय नमः—इत्येवं प्रयोगः—

एकैकस्य तिलैर्मिश्रान् त्रींस्त्रीन् कृत्वा जलांजलीन् ।
यावज्जीव कृतं पापं तत्क्षणादेव नश्यति ॥

पद्मपुराणे—

पितृत्वादपसव्येन दक्षिणाभिमुखस्तिलैः ।
देवत्वाद्देवतीर्थेन यमं सन्तर्पयेत् बुधः ।

व्यासः । कृष्णपक्ष त्रयोदश्यां चतुर्दश्यां वा—

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥

इत्येतैः सप्तनामभिर्नमस्कार मंत्रैः सप्तोदकाञ्जलीन् दद्यात् सर्व पापेभ्यः प्रमुच्यत इति ।

तदेव माह यमः—

दत्वा जलांजलीन् सप्त कृष्णपक्षे चतुर्दशीम् ।
धर्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते ॥
अनर्काभ्युदिते काले माघ कृष्ण चतुर्दशीम् ।
स्नातः सन्तर्प्य तु यमं सर्वपापैः प्रमुच्यते ॥
यत्र क्वचन नद्यां हि स्नात्वा कृष्ण चतुर्दशीम् ।
सन्तर्प्य धर्मराजानं मुच्यते सर्वकिल्विषैः ॥

एवं कुर्वतः फलमाह मनुः—

इह जन्म कृतंपापमन्यजन्म कृतञ्च यत् ।
अङ्गारक चतुर्दश्यां तर्पयंस्तद् व्यपोहति ॥

तथा माघ शुक्लाष्टम्यां भीष्मतर्पणं स्मरन्ति महाभारते—

शुक्लाष्टम्यान्तु माघस्य दद्यात् भीष्माय यो जलम् ।
सम्वत्सरकृतंपापं तत्क्षणादेव नश्यति ॥

अत्रायं मन्त्रः—

वैयाघ्रपद गोत्राय साङ्कृत्य प्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येहं तिलोदकम् ॥
अपुत्राय ददाम्ये तज्जलं भीष्माय शर्मण इति ॥

इति यमभीष्मतर्पणे ।

## अथ प्रसङ्गादाचमनमप्युच्यते ।

सकल कर्मणामाचमन पूर्वकत्वात् कर्मणि व्याघ्रियमाणानामपि क्षुतादि निमित्तोपपाते चाचमनस्या वश्य कार्यत्वादस्ति श्राद्ध कर्तॄणा-माचमन विधि ज्ञानापेक्षेति । तत्र कर्मणामाचन पूर्वकत्वमाह मार्कण्डेयः—

सम्यगाचम्य तोयेन क्रियाः कुर्वीत वै शुचिः ।
देवतानामृषीणाञ्च पितॄणां चैव यत्नतः ॥

अकृताचमनस्य दोष उक्तो ब्रह्मपुराणे—

यः क्रियां कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्तिहि वृथा तस्य क्रियाः सर्वा न संशयः ॥

ब्रह्माण्डपुराणे—

श्राद्धमारभ्य मानस्तु प्रक्ष्याल्याङ्घ्री करौ तथा ।
अद्भिः सम्यग्विशुद्धाभिः द्विराचामेदुदङ्मुखः ॥

मार्कण्डेयपुराणे—

आचान्तः पुनराचम्य द्विजपादा वनेजनम् ।
विधाय पुनराचामेत् पादौ प्रक्षाल्य यत्नतः ॥

जातूकर्ण्यः—

अभ्यर्च्य गन्धमाल्याद्यै र्विश्वान् देवान् पितॄनपि ।
आचम्य चाग्नौकरणं कुर्वीत सु समाहितः ॥

ब्रह्मपुराणेत्वर्घ्यदानान्तरमेव आचमनमुक्तम्—

जलं क्षीरं दधि घृतं तिल तण्डुल सर्षपान् ।
कुशाग्राणि च पुष्पाणि दत्वा चामेत्पुनः स्वयम् ॥

आदित्यपुराणे—

येऽग्निदग्धा इति प्राज्ञो भुव्यन्नं विकरेत्ततः ।
स्वयमाचम्य विप्राणामपो दद्यात् सकृत् सकृत् ॥

सम्वर्त्तः—

दक्षिणाभिमुखः स्थित्वा विकीर्य्यान्नं ततो भुवि ।
निर्णिक्तहस्त आचम्य ततो मधुमतीर्जपेत् ॥

आदित्यपुराणे—

पिण्डनिर्वपणं कृत्वा पितॄणा मनु पूर्वशः ।
तथा मातामहानाञ्च कुर्य्यादाचमनं ततः ॥

विश्वामित्रः—

निधाय पिण्डान् सम्पूज्य गन्ध माल्यादिभिस्ततः ।
उपस्पृशेदपस्तञ्च देशं प्रोक्षेद मत्सरः ॥

पराशरः—

श्राद्धं समाप्य विधिवत् विसर्ज्य ब्राह्मणानपि ।
द्विराचम्य प्रकुर्वीत वैश्वदेवादि नैत्यकम् ॥

तदेत दामन सप्तकं समासेनाह संग्रहकारः—

आदौ विप्राङ्घ्रि शौचान्तेऽभ्यर्चने विकिरे कृते ।
पिण्डान् दत्वार्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा ॥
आचामेच्छ्राद्धकर्त्ता तु स्थानेष्वे तेषु सप्त सु ।
आद्यन्तयो र्द्विराचामेच्छेषेषु च सकृत् सकृत् ॥

गोभिलः—

आरम्भे चावसाने च द्विराचमनमिष्यते ।
अन्यत्र पितृकार्य्येषु सकृदाचमनं स्मृतम् ।।

अत्रकैश्चिदुक्तम्—

श्राद्धारम्भेवसाने च पादशौचार्चनान्तयोः ।
विकिरे पिण्डदाने च द्विराचमनमिष्यते ।।

एतदपि—

आदावन्ते तथार्चायां विप्रपाद प्रशोधने ।
विकिरे पिण्डदाने च षड्भिराचमनं स्मृतमिति ।।

तच्च तन्मते पिण्ड निर्वापनानन्तर मुदगावर्त्तनात् पूर्वमाचमनं न विद्यते किन्तु गन्धादि दानान्तं सकलमपि पिण्डदान प्रयोगं समाप्याचमनं क्रियत इति ।

इति श्राद्धाचमनानि ।

## अथाचमनापवादः ।

तत्र याज्ञवल्क्यः—

मुखजा विप्रुषो मेध्या स्तथाचमन विन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ।।

मुखजाः—मुखान्निःसृताः। विप्रुषः—श्लेष्मविन्दवः। मेध्याः—नोच्छिष्टतामापादयन्ति । निष्ठीव्योक्त्वा नृतानि चेति निष्ठ्यूतवत आचमन विधानादनाचान्तस्या शुद्धता ज्ञायते । विप्रुषामपि मुखान्निष्क्रमणं निष्ठीवन मेव । अतोऽत्रापि प्राप्तस्याचमनस्यापवादार्थमिदमुच्यते । तथा आचमतो हस्तादधोङ्गुलिविवरैः पतन्त उदविन्दवोऽपि मेध्याः । श्मश्रु—मुखलोम—तत आस्यगतं मुखान्तः प्रविष्टमपि मेध्यं । दन्तसक्तमप्यन्नादिकं अनाचामन्नपि शुचिर्भवति । विप्रुषां स्पर्शे तु मल स्पर्श निमित्ताचमनं कर्त्तव्यमेव ।

मनुरपि—

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं नयान्ति याः ।
नश्मश्रूणि गतान्यास्यन्न दन्तान्तरधिष्ठितम् ॥

दन्तान्तः—दन्तानां मध्ये छिद्रे वा । अधिष्ठितं संसक्तम् । आचमन विन्दवो मेध्या इत्युक्तं तत्र विशेषमाह मनुः—

स्पृशन्ति विन्दवः पादौ य आचमयतः परान् ।
भौमिकैस्ते समाज्ञेया न तैरप्रयतो भवेत् ॥

यः परस्मै आचमनं ददाति तस्याचम यितृहस्त पतितैरुदविन्दु भिर्यदि पादौ स्पृश्येते तदासौ ना शुचिः । यतस्ते भौमिकैः समाः—यथानुपहतायां भूमौस्थिताः काश्चिदुदमात्राः शुद्धाः—एवमुच्छिष्ट हस्तात्पतन्तोऽपि ते शुद्धा एवेत्यर्थः । अत्र पाद ग्रहण मवयवान्तरस्यापि दर्शनार्थम् । आचमयितुरेवात्र शुद्धयभिधानादाचमन कर्त्तुरन्येषां चसमीपस्थानामाचमन विन्दु स्पर्शे भवत्ये वा प्रायत्यमिति ज्ञायते । अतएवाह बौधायनः—

स्पृशन्ति विन्दवः पादौ यस्याचामयतः परान् ।
नतैरुच्छिष्ट भावः स्यात्तुल्यास्ते भौमिकैः सह ॥

यमः—

प्रयान्त्या चमतोयाश्च शरीरे विप्रुषो नृणाम् ।
उच्छिष्ट दोषो नास्त्यत्र भूमि तुल्यास्तु ताः स्मृताः ॥

एते च भूम्यभिघातोत्थिता एव शुद्धाः नान्तरालस्पृष्टाः । अतएवाह पैठीनसिः—

भूमिगता विन्दवः परामृष्टाः पूताः विप्रुषः शुद्धा विलोम क्लिन्नेष्वा चामेदिति । मुख प्रविष्टैः श्मश्रुभिर्नोच्छिष्टतेति ।

आहुश्च बौधायन मनु वसिष्ठ हारीताः—

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्या वशिष्टं स्यान्निगिरन्नेव तच्छुचिः ॥

दन्तवद्दन्तलग्नेष्विति रसानुपलब्धौ सत्यां वेदितव्यं । तत्राह शङ्खः—

दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्र जिह्वाभिमर्शनादिति । अन्यत्रेत्यादि रसानुपलब्धा वपि जिह्वाभिमर्शने सत्य शुचित्वमित्यर्थः । दन्तवद्दन्तलग्नं इत्य निर्हार्य्यं लेपाभिप्रायम् ।

तथाच देवलः—

दन्तलग्नमसंहार्य्यं लेपं मन्ये तदन्तवत् ।
न तत्र बहुशः कुर्य्यात् यत्नमुद्धरणे पुनः ॥
भवेदशौचमत्यर्थं तृणवेधाद्व्रणेकृते ॥

शातातपः—

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

स्नेहोऽत्र कृताचमनस्यापि यो हस्तादिलग्नो भोजन स्नेहः ।

वसिष्ठ-पराशरात्र्यङ्गिरसाः—

प्राणाहुतीषु सोमे च मधुपर्के तथैव च ।
आस्य होमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥

आस्य होमेषु—दृष्टावशिष्ट भक्ष्येषु ।

इत्याचमनापवादः ।

## अथाचमने निषेधः ।

तत्र हारीतः—

ना यज्ञोपवीती न मुक्तशिखो न तिष्ठन्न हसन्न जल्पन्न विलोकयन्ना विलोकिताभिरद्भिर्नोष्णाभिर्न कलुषाभिर्नफेनाभिर्न सबुद्बुदाभिराचामेदिति ।

तिष्ठन्—ऊर्ध्वचक्षुः । विलोकयन्—दिशः—तस्मिन्नेव जले निज प्रतिबिम्बम्वा ।

शङ्ख लिखितौ । न तिष्ठन्न प्रणतो नाङ्गुलिभिनमुखशब्दं कुर्वन्नाधौत पादो ना यज्ञोपवीती न मुक्तशिख आचामेदिति ।

शङ्खः—

वहिर्जानुरुपस्पृश्य एक हस्तार्पितैर्जलैः ।
सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ॥

व्यासः—

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छ शिखोपि वा ।
उष्णीषी वापिना चामेदाचान्तोप्य शुचिर्भवेत् ॥
अपः पाणि नखाग्रेषु आचामेद्यस्तु ब्राह्मणः ।
सुरापानेन तत्तुल्य मित्येवमृषिमब्रवीत् ॥

श्मश्रुदेशेपि वेष्टनवान्—उष्णीषी ।

विष्णुः—

जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
अधस्ताच्छत कृत्वोपि समाचान्तो न शुध्यति ॥

जान्वोरधस्तादाचमननिषेधाज्जानुमात्रेप्य विरुद्धमाचमनमिति ज्ञायते ।

तदाह जातूकर्ण्यः—

जानुमात्रे जलेतिष्ठन्नासीनः प्राङ्मुखः स्थले ।
सर्वतः शुचिराचान्त स्तयोस्तु युगपत् स्थितः ॥

तयोः—जल—स्थलयोरित्यर्थः ।

अतएव हारीतः—

जलस्थो वा स्थलस्थो वा द्वयोर्वा समतः स्थितः ।
जलस्थो जल कृत्येषु स्थलस्थः स्थल कर्मसु ।
उभयोस्तूभयस्थस्तु कर्मस्वधि कृतो भवेत् ॥

दक्षः—

स्नात्वाचामेद्यदाविप्रः पादौ कृत्वा जलेस्थले ।
उभयोरप्यसौ शुद्धस्ततः कार्य्य क्षमो भवेत् ॥

यमः—

अपः करनखस्पृष्टोय आचामति वै द्विजः ।
सुरांपिवति सुव्यक्तं यमस्यवचनं तथा ॥
उद्धृत्य वामहस्तेन यत् पिवेत् ब्राह्मणो जलम् ।
सुरापानेन तत्तुल्यं मनुः स्वायम्भुवोऽब्रवीत् ॥

गौतमः—

नाञ्जलिना पिवेन्नतिष्ठन्नानुद्धृतेनोदके नाचामेत् न पशुवन्मुखे न पिवेदिति ।

छागलेयः—

करकालावु काष्ठेन ताम्र चर्म पुटेन च ।
स्वहस्ताचमनं कार्य्यं स्नेहाऽलापांश्च वर्जयन् ॥
करपत्रे च यत्तोयं यत्तोयं ताम्रभाजने ।
सौवर्णे राजते चैव नैवाशुद्धयेत्तु कर्हिचित् ॥

वामहस्त संसक्तेन दक्षिणकरेणाचमनं कार्य्यमित्याह यमः—

तावन्नोपस्पृशेद्विद्वान्यावद्वामेन न स्पृशेत् ।
वामेहि द्वादशादित्या वरुणश्च जलेश्वरः ॥

देवलः—

येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु देशेषु यत्तोयं याच यत्रैव मृत्तिका ॥
येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः ।
तत्र तान्नाव मन्येत धर्मस्तत्रैव तादृशः ॥

अत्र मनुष्य देव पितृकार्य्येषु दिग्व्यवस्थामाह पैठीनसिः—

प्राङ्मुख उदङ्मुखो वोपविश्यान्तरुर्वो हस्तौकृत्वा शुद्धा आपः संगृह्य आमणि वन्धनात्पाणी प्रक्षाल्याभिमुखं ब्रह्मद्वारं मनुष्याणां प्राचीनञ्चैव देवानां पितॄणां दक्षिणं स्मृतमिति ।

अभिमुखं ब्रह्मद्वारं ध्रुवमण्डलाख्यं—

मण्डलस्यास्य पुच्छन्तु शिशुमारा कृतेर्ध्रुवः ।
मध्ये नारायणश्चेति ब्रह्मद्वार मिदञ्जगुः ॥

इति गारुडपुराणेभिधानात्। ध्रुव मण्डलेन चोत्तरादिक् लक्ष्यते। अतश्चोदीची प्राची -दक्षिणा मनुष्य देव पितॄणान्दिशः। मनुष्यादि कर्मसु तत्तद्दिगभिमुखे ना चान्तर्व्यामित्यर्थः। तत्र व्यासः। वाहूजान्वन्तरा कृत्वातीर्थेन शुचिराचा मेदिति। तारणाय पाप प्रमोचनाय तिष्ठतीति- तीर्थ शब्देन कश्चित्पावनतमो देश उच्यते। तरत्यनेन तीर्थमिति क्वचिज्जलावतरण मार्गः। इहतूदकाधारे करतलैकदेशेस्तुत्यर्थं तीर्थं शब्द प्रयोगः। अतः कर विशेष तलैकदेशे ना चामेदित्यर्थः।

अत्र विशेषमाह देवलः--

अथापः प्रथमात्तीर्थाद्दक्षिणात् त्रिः पिवेत्समम्।

प्रथमात्तीर्थात्-ब्रह्मतीर्थात्। दक्षिणात्-दक्षिणहस्तस्थितात्। त्रिः-वारत्रयं। समं-तुल्यकालं-अव्यवधानेनेत्यर्थः।

विष्णुः--

ब्राह्मेण तीर्थेन त्रिःपीत्वाद्भिः परिमृज्यान्मुखमिति।

मनुः—

त्रिःप्राशयेदपः पूर्वं द्विसन्मृज्यात्ततो मुखम्।
खानिचैव स्पृशेदद्भि रात्मानं शिर एवच॥

मुखं-ओष्ठद्वयं। आत्मान मिति हृदयं नाभिं वा निर्दिशति। उपनिषत्सु-अन्तर्हृदय आत्मानं पश्येत्। इति कथ्यते। अतो हृदयस्याय स्पर्शः। क्षेत्रज्ञस्यात्मनो विभोरमूर्त्तस्य स्पर्शा सम्भवात् एतच्चोदक पान मुपविष्टे नैव कार्य्यम्।

आहापस्तम्बः—

आसीनस्त्रिराचामेत् हृदयङ्गमाभिरद्भिरिति।

हृदयङ्गमाः- हृदयस्पृशः।

भरद्वाजः—

संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः।
मुक्त्वाङ्गुष्ठ कनिष्ठेतु शेषेणाचमनं चरेत्॥

तत्र सम्वर्त्तः--

परिमृज्य द्विरास्यन्तु द्वादशाङ्गानि चालभेत्।

त्रिःप्राशनान्तरं द्विबारं औष्ठौ परिमृज्य मुखं नासिकाद्वयं नेत्रद्वयं श्रोत्रद्वयं नाभि हृदयं मूर्द्धानं बाहूद्वयं चेति द्वादशाङ्गानि चालभेत्। पूर्वमेव मूर्द्ध्नि स्पर्शनमङ्गुलीनां स्थानान्तरं क्रमान्तरं चाहशङ्खः—

ततोऽङ्गुलि चतुष्केण स्पृशेन्मूर्द्धानमादितः।
मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं पृथक्॥
अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नासापुटे क्रमात्।
अङ्गुष्ठेन कनीयस्या कर्णौ संयोगतः स्पृशेत्।
तर्जन्यङ्गुष्ठ योगेन नाभिं हृदितलंन्यसेत्॥

तलं हस्तमध्यं हृदयेन्यसेत्।

वृद्धशङ्ख पैठीनसि दक्षादयस्तु पृथक् पृथक् भेदेनाङ्ग स्पर्शनमाहुः। इह येषां शाखिनामङ्गस्पर्शनं नाम्नातं तेषां विकल्प एव। येषान्तु तदुक्त तेषामविरोधात् वचनान्तरानुसाराच्च अङ्गान्तरोपस्पर्शन मप्यस्तीत्यवगन्तव्यमिति।

अत्रार्थवादमाह वृद्धशङ्खः—

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः॥
गंगा च यमुना चैव प्रीयेते परिमार्जनात्।
नासत्य दस्रौ प्रीयेते स्पृष्टे नासापुटद्वये॥
स्पृष्टे लोचन युग्मेतु प्रीयेते शशि भास्करौ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते चानिलानलौ॥
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वपर्वताः।
नाभि संस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः॥
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः।
मूर्द्ध संस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्॥
एवमाचमनं कुर्वतः फलमाह वैयाघ्रपात्।
य एवं ब्राह्मणो नित्य मुपस्पर्शन माचरेत्॥
ब्रह्मादिस्तम्ब पर्यन्तं जगत् स परितर्पयेत्॥

इत्याचमन प्रकरणम्॥

# अथ संक्षेपतो नान्दीश्राद्धपद्धतिः ।

विष्णु धर्मोत्तरे—

वृद्धौ समर्चये द्विद्वान् नित्यं नान्दीमुखान् पितॄन् ।
सम्पादितो विशेषस्तु शेषं पार्वणवद्भवेत् ॥

विशेषः–पितॄणां नान्दीमुख संज्ञकत्व मित्येषः। उपलक्षणं चैतत् प्रागुक्तानां वैशेषिकाणां सर्वेषां धर्म्माणाम् । यथा भाद्रपदान्तर्गतामावस्यां कन्याराशिस्थिते रवौ अश्रुमुखानां पित्रादि त्रयाणां पार्वणविधिना श्राद्धमावश्यकं तथैव कन्यागते रवौ प्रत्यब्दं पौर्णमास्यां तेषां प्रपितामहात् पराणां त्रयाणामपि नान्दीमुखविधिना श्राद्धमवश्यकार्य्यं तेतु सदैव नान्दीमुखाः प्रसन्नमुखाः स्वाभ्युदयार्थं पूजनीया । इत्याह हारीतः—

पुष्टिं प्रजां स्मृतिं मेधां पुत्रानैश्वर्य्य मेव च ।
कुर्वाणः पौर्णमास्यान्तु सर्वं सम्पूर्ण मश्नुतेति ॥

ब्रह्मपुराणे—

येस्युर्पिता महादूर्ध्वं तेस्युर्नान्दीमुखास्त्रयः ।
प्रसन्नमुख संज्ञास्तु मङ्गलीयायतस्तुते ॥

अत्र पितामह वचनेन प्रपितामहो लक्षणीयः। तदेव ब्रह्मपुराण वचनात्—

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयोह्यश्रु मुखाह्येते पितरः सम्प्रकीर्तिताः ॥
तेभ्यः परे त्रयोयेतु तेतु नान्दीमुखाः स्मृता ।
नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ॥
पौर्णमास्यान्तु कर्त्तव्यं वराह वचनं यथा ॥

भाद्रपद मासान्तर्गते यत्र क्वचनदिने कन्याराशौ रवि संक्रमणे जाते तन्मासमध्य वर्त्तिन्यां पौर्णमास्यां नान्दीमुखानां पितॄणां श्राद्धं कर्त्तव्यम् । तच्चावश्यकं–प्रत्यब्द मिति वचनात् । नान्दीमुख शब्देन चात्र प्रपितामहात् परे विवक्षिताः । अस्य नान्दीमुख वचनस्यै तत्

पौर्णमासी निमित्तक श्राद्ध विधिनैक्यता परत्वात् *श्राद्धान्तरे नान्दीमुख शब्देन प्रपितामहात्परे त्रयो न ग्राह्याः ।

## कात्यायनोक्ता प्रयोगपद्धतिस्तु प्रागुल्लिख्यात्र गोभिलोक्ता प्रयोगपद्धतिरपि लिख्यते ।

आभ्युदयिके श्राद्धे युग्मा ब्राह्मणाः प्रदक्षिण मुपचार ऋजवो दर्भा यवैस्तिलार्थो दधि वदराक्षत मिश्राः पिण्डा नान्दीमुखाः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यः स्वाहोच्यता मिति स्वधा वाचन स्थाने स्वाहां प्रयुञ्जीतेति ।

## पारस्कर गृह्ये श्राद्धकाशिकायामाभ्युदयश्राद्धसूत्राणि ।

आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमंत्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थाः संपन्नमिति तृप्ति प्रश्नः सुसंपन्न मिती तरे ब्रूयुर्दधि वदराक्षत मिश्राः पिण्डा नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्य स्थाने नान्दीमुखान् पितॄन्वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्मानाशयेदत्र ।

अत्र श्लोक कात्यायनः—

अतः परं प्रवक्ष्यामि विशेष इहयो भवेत् ।
प्रातरा मंत्रितान् विप्रान् युग्मानुभयतस्तथा ।
उपवेश्य कुशान् दद्याद्दजूनेवहि पातितान् ॥

अस्यार्थः । पूर्वेद्युस्तदहर्वा निमंत्रितान् विप्रान् प्रातरेव पूर्वाह्ण एव युग्मानुभयतस्तथा देवपक्षे द्वौ मातृपक्षे द्वौ तथेति वचनात् पितृपक्षे द्वौ मातामहपक्षे द्वौ एवमष्टौ द्विजान् आहूय तथैव उभयत इति चतुरः पूर्वं मुखानेकत उपवेश्यान्यतश्चतुर उदङ्मुखान् चरणक्षालनं कृत्वासनेपूपवेश्य ऋजुभूतैरेव दर्भैरासनं दद्यात् ।

---

* पुत्र जन्मादि काल विहित विशेषेषु ।

तथाच भविष्यत्पुराणे —

प्राङ्मुखांश्चतुरश्चैव चतुरश्च उदङ्मुखान् ।
निवेश्य ऋजुभिर्दर्भैर्दद्यादासनमादरात ।।

अथवा सर्वानपि प्राङ्मुखानुपवेशयेत् ।

तथाच छागलेयः—

सर्वानेवहितान्विप्रान् प्राङ्मुखानुपवेशयेत् ।।

मातृ-पितृ-मातामह श्राद्धे युग्मान् ब्राह्मणानाह वृद्ध शातातपः—

त्रिष्वप्ये तेषु युग्मांस्तु ब्राह्मणान्नियतः शुचिः ।।

युग्म सङ्ख्यासु तत्सङ्ख्या विशेषादरार्थमाह छागलेयः—

एकैकस्य च वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत् ।
वैश्वदेवे तथा द्वौच न प्रसज्येत विस्तरे ।।

तथैवाश्वलायन गृह्य परिशिष्टे—

प्रदक्षिण मुपचारो यवैस्तिलार्थः सर्वं द्विर्द्विः ।।

इत्यादि वचनात् साङ्कल्पिके वा पिण्डरहिते सहिते वा सर्वत्र नान्दी श्राद्धे अष्टावेव द्विजाः पूज्याः नाधिकाः । अतएव चत्वार्य्यर्घ्य पात्राण्युक्तानि छान्दोग्य ग्रन्थे । चत्वार्य्ये वार्घ्यपात्राण्याभ्युदयिक इति । अत एवोक्तं न स्वधा शर्म वर्मेति पितृ नामनचोच्चरेदिति ।

## अथ नान्दीश्राद्धे कर्त्तव्यतया प्राप्त पूजने प्रथमतः शान्तिपाठ मंत्राः ।

ॐ आनो भद्राः क्रतवो यन्तु विश्वतो दब्धासोऽअपरीतासऽउद्भिदः। देवानो यथा सदमिद्वृधे असन्न प्रायुवो रक्षितारो दिवे दिवे ॥ १ ॥ देवानाम्भद्रा सुमति ऋजूयतान्देवाना ँ रातिरभिनो निवर्त्तताम् । देवाना ँ सख्यमुपसेदिमाव्वयन्देवानऽआयुः प्रतिरन्तु जीवसे ॥ २ ॥ तमीशान ञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहेव्वयम् । पूषानो यथा व्वेद

सामसद्बृधे रक्षितापायुरदब्धः स्वस्तये ॥ ३ ॥ स्वस्तिनऽइन्द्रो बृद्धश्रवाः स्वस्तिनः पूषाव्विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्ट नेमिः स्वस्तिनो बृहस्पतिर्द्दधातु ॥ ४ ॥ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्ये माक्षभिर्यजत्राः । स्थिरै रङ्गै स्तुष्टुवा ꣳ सस्तनूभिर्व्यशे महि देवहितं यदायुः ॥५॥ शतमिन्नु शरदोऽअन्ति देवा यत्रानश्चक्रा जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्यारी रिष तायुर्गन्तोः ॥ ६ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपिता सपुत्रः । व्विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ ७ ॥ तत्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुतवा हिरण्यैः । नाकङ्गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधिरोचने दिवः ॥ ८ ॥ द्यौः शान्तिरन्तरिक्ष ꣳ शान्तिः पृथिवी शान्तिरापः शान्ति रोषधयः शान्तिः । वनस्पतयः शान्ति र्विश्वेदेवाः शान्ति र्ब्रह्मशान्तिः सर्व ꣳ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥ ९ ॥ यतो यतः समीह सेततोनोऽअभयङ्कुरु । शन्नः कुरु प्रजाभ्योऽभयं न्नः पशुभ्यः ॥१०॥ सुशान्तिर्भवतु ॥

ॐ श्रीमन् महागणाधिपतये नमः । ॐ लक्ष्मीनारायणाभ्यां नमः । ॐ ऊमा महेश्वराभ्यां नमः । ॐ वाणी हिरण्यगर्भाभ्यां नमः । ॐ शाची पुरंदराभ्यां नमः । ॐ मातृ पितृ चरणकमलेभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तु देवताभ्यो नमः । ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः । तत ॐ अपवित्रेति सर्ववस्तून्यात्मानं च सिंचेत् । ॐ पुण्डरीकाक्षः पुनात्विति । अत्र पत्न्यौ सत्यांतया सह सङ्कल्पं कुर्यात् । ॐ स्वस्ति श्रीमत् सच्चिदानन्द ब्रह्मणे नमः । श्री पुराण पुरुषोत्तमाय नमः । अस्मिन जम्बूद्वीपे कर्मभूमौ बौद्धावतारे गंगादि सरिद्भिः पावते भारतवर्षे निखिल जन पावन परम भागवतोत्तम शौनकादि ऋषिगण सेविते पुण्य स्थले कुरुक्षेत्रादि मध्यरेखाया अमुकदिग्भागे श्रीभागीरथ्या अमुक तटे श्रीमन्नारायण नाभिकमलोद्भूत सकल जगत्स्रष्टुः पराद्धद्वय जीविनो ब्रह्मणो द्वितीय परार्द्धे पञ्चाशदधिके प्रवर्षे प्रथम मासे प्रथम पक्षे प्रथम

दिवसेऽह्नो द्वितीये यामे तृतीये मुहूर्त्ते रथन्तरादि द्वात्रिंशत्कल्पानां मध्ये ऽष्टमे श्री श्वेत वाराह कल्पे स्वायम्भुवादि मन्वन्तराणां मध्ये सप्तमे वैवस्वत मन्वन्तरे सद्युगादि चतुर्युगानां मध्येऽष्टाविंशतिमे कलियुगे कलि प्रथम चरणे अमुक सम्वत्सरे अ० गोलावलम्बिनि सवितरि अमुकायने अ० ऋतौ अ० मासे अ० पक्षे अ० तिथौ अ० वासरे अमुकामुक नक्षत्र योग करण लग्न मुहूर्त्तेषु अमुकामुक राशि स्थितेषु सूर्य्यादि ग्रहेषु एवं ग्रह गुण विशिष्टे शुभेक्षणे अमुक गोत्र अ० शर्माहं श्रुति स्मृति पुराणोक्त फल प्राप्त्यर्थं मम सकुटुम्बस्य सपरिवारस्य सूर्य्यादि नव ग्रह सूचित सर्वारिष्ट निरसन पूर्वक सकल शुभ फल प्राप्त्यर्थं निरवच्छिन्न गार्हस्थ्यादि धर्म सिद्धि पूर्वक अन्ते मोक्षफल प्राप्त्यर्थं करिष्यमाण अमुक कर्मणः पूर्वाङ्गभूत स्वस्तिवाचन गणपति पूजन कलश स्थापन पुण्याह वाचन सूर्य्यादि नवग्रह मातृका घृत मातृका पूर्वक साङ्कल्पिकेन विधिना ( वा सपिण्डक विधिना ) नान्दीश्राद्धं करिष्ये ।

तत्रादौ कर्मार्थं जलपूरित कलशार्चनं कुर्यात् । ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः । अहेऽमानोव्वरुणे हवोध्युरुश ᳪ समानऽआयुः प्रमोषीः । इत्यावाह्य कलशे वरुणाय नम रिति गन्धाक्षत पुष्पैः कलशं पूज्य हस्तेनालभ्याभिमंत्रयेत् । कलशस्य मुखे विष्णुरित्यादि पठित्वा गंगाद्या वाहनं कुर्यात् । गंगे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु । अस्मिन् कलशे सर्वाणितीर्थान्यावाहयामि पूजयामि नमस्करोमि । ततः कलशोदकेन पूजा सम्भारान् प्रोक्षयेत् । तत ॐ दीपायनम रिति गन्धाक्षत पुष्पै दीपं सम्पूज्य प्रार्थयेत् । भो दीपत्वं ब्रह्मरूप अन्धकारनिवारक । इमां मया कृतां पूजां गृह्णं स्तेजः प्रवर्धय ।

ततः स्वस्ति वाचनम् । ॐ स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ १ ॥ पयः पृथिव्यांम्पय ओषधीषु पयोदिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ २ ॥ विष्णोररराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः

स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवेत्वा ॥ ३ ॥ अग्निर्देवता व्वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता दित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पति र्देवतेन्द्रो देवता व्वरुणो देवता॥४॥ द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवी शान्ति रापः शान्तिरोषधयः शान्ति र्वनस्पतयः शान्ति र्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व ँ शान्तिः शान्ति रेव शान्तिः सामा शान्तिरेधि ॥ ५ ॥ विश्वानि देव सवितर्दुरितानि परासुव यद्भद्रं तन्नऽआसुव ॥ ६ ॥ दीर्घायुत्वाय वलाय वर्चसेसु प्रजास्त्वाय शंसाय अथो जीव शरदः शतम् ॥ ७ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहेमतीः यथा शमस द्विपदे चतुष्पदे विश्वम्पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ८ ॥ गणानान्त्वा गणपति ँ हवामहे प्रियाणान्त्वा प्रियपति ँ हवामहे निधीनान्त्वा निधिपति ँ हवामहे वसो मम आहम जानि गर्भधम मात्वम जासि गर्भधम् ॥ ९ ॥ नमो गणेभ्यो गणपतिभ्यश्चवो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्चवो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्चवो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्चवो नमः ॥ १० ॥ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टम् यज्ञ ँ समिमं दधातु विश्वेदेवास इह मादयन्ता मोइम्प्रतिष्ट ॥ ११ ॥ एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्तेन सर्वमेव प्रतिष्ठितम्भवति ॥ १२ ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्न राजो विनायकः॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणु या दपि॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते॥ वक्रतुण्ड महाकाय सूर्य कोटि समप्रभ। अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ ॐ विघ्नवल्लि कुठाराय गणाधिपतये नमः। इत्यावाह्य हस्त सम्पुटौ कृत्वा प्रार्थयेत्। ॐ यत्पादपल्लवयुगं विनिधाय कुम्भ द्वन्द्वे प्रयाण समये सगणाधिराजः। विघ्नान्वि हन्तुं क्षमस्य जगत्रयस्य गोविन्दमादिपुरुषं तमहं भजामि॥ ॐ गजकाय नम इत्यक्षतान् गृहीत्वा मनो जूति रिति प्रतिष्टाप्य पठेत्। भोरम्ब त्वमे ह्येहि अम्बिका त्र्यम्बकात्मज । सिद्धि बुद्धिपतेऽध्यक्ष सर्वलोक पितः पितः। नागास्य नागहारत्वं गणनाथ चतुर्भुजः।

भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुश परिस्वधैः। आवाहयामि पूजार्थं रक्षार्थं चाध्वरस्यमे। इत्यावाह्य सम्पूज्य पुष्पाञ्जलिं दद्यात्। ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो वाहुरुविश्वतस्पात्। सम्बाहुभ्यां धमति सम्पतत्रैर्घो वा भूमी जनयन्देव एकः। ततो गन्धाक्षत पुष्पफल जलैर्विशेषार्घं दद्यात्। रक्ष रक्ष गणाध्यक्ष रक्षत्रैलोक्य रक्षक भक्तानामभयंकर्त्ता त्राता भव भवार्णवात्। द्वैमातुर कृपासिन्धो षाण्मातुरग्रज प्रभो। अनेन सफलार्घेण फलदोस्तु सदा मम। ॐ सिद्धि बुद्धि सहित महागणपतये नम विशेषार्घं समर्पयामि॥ ततः प्रार्थना॥ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय। नागाननाय श्रुति यज्ञ विभूषिताय गौरीसुताय गणनाथ नमो नमस्ते॥ भक्तार्त्तिनाशन पराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय। विद्याधराय विकटाय च वामनाय भक्तप्रसन्न वरदाय नमो नमस्ते॥ नमस्ते रुद्र रूपाय करि रूपाय ते नमः। विश्वरूप स्वरूपाय नमस्ते ब्रह्मचारिणे॥ भक्तप्रियाय देवाय नमस्तुभ्यं विनायक। लम्बोदर नमस्तुभ्यं सततं मोदक प्रिय॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ त्वां विघ्न शत्रुदल नेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति। विद्याप्रदेत्यघहरेति च येस्तु वन्ति तेभ्यो गणेश वरदोभव नित्यमेव॥ अनेन पूजनेन सिद्धि बुद्धि सहित महागणपतिः साङ्गः सपरिवारः प्रीयताम्॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं गजानन। यत्पूजितं मया देव परिपूर्णं तदस्तुमे॥ इति गणपतिं सम्पूज्य पुण्याहवाचनं कुर्यात्।

तत्र कारिकायाम्—

स्वस्तिवाचनमत्रेष्टं गृह्य कर्मादिकेषु च।
आचार्येणापि शास्त्रेस्मिन्मङ्गलार्थ मुदीर्यते॥ १॥
क्रमेण कलशं स्थाप्य पूर्णपात्रं तु सर्वशः।
वरुणं तत्र सम्पूज्य गंगाद्या वाहनादिकम्॥ २॥
अर्चिता ब्राह्मणाः सम्यग्गन्ध ताम्बूल दक्षिणाः।
तिष्ठेयुर्ब्राह्मणा युग्मा वक्तारो दर्भपाणयः॥ ३॥

तिष्ठे द्वाचपिता तेषां दक्षिणस्थ उदङ्मुखः ।
अवनीगत जानुभ्यां ततो मुकुल* पद्मवत् ॥ ४ ॥
अञ्जलिं शिरस्याधाय प्रणमेत् त्रिः पुनः पुनः ।
हस्ते कलश मुद्धृत्य नमेत् त्रीणि पदानि च ॥ ५ ॥
अथवाचयितुं वाहुं दक्षिणाङ्ग समाश्रितः ।
मन इत्यादि रूपेण एकाग्रमिति चादिशेत् ॥ ६ ॥
मनसः स्म इति ब्रूयुस्ते समाहित पूर्वकाः ।
प्रसीदन्त्विवति कर्त्तारः प्रसन्नास्म इति द्विजाः ॥ ७ ॥
शान्तिरस्त्विवति विघ्नान्ताः शब्दाः पञ्चदशैव तु ।
अस्तु वाक्यं द्विजमुखाच्छ्रावयित्वा तथापरैः ॥ ८ ॥
षड् वाक्यानि अस्त्विवति च इतरैरेकविंशतिः ।
प्रीयतां वाक्य पठितै रुदकस्य निषेचनम् ॥ ९ ॥
ततः षड्वाक्य पठितैर्वहिरापो निषेचनम् ।
अन्ते दश शुभं वाक्यं निकामेति ततो जपः ॥ १० ॥
शुक्रादयो ग्रहाश्चैकं भगवांस्त्व्यभिषेचनम् ।
उदकस्य प्रकुर्वीत पुण्याहं वाचयेत्ततः ॥ ११ ॥
पुण्याहादि त्रिरभ्यास मंत्रमभ्योर्ध्वनिः स्वनैः ।
पुण्य कल्याणमृद्धिश्च स्वस्तिश्रीत्यादि पञ्चकम् ॥१२॥
प्रणवाद्यं त्रिराचष्टे भवत्पूर्वं भवन्त्विवति ।
प्रत्युक्त विषये प्रेष स्त्रिवारं स्वस्ति रित्यतः ॥ १३ ॥
वारुणैः पावमानीयै रभिषिच्य सपत्निकम् ।
नीराजनं ततः कुर्य्यादन्तेकर्मेश्वरार्पणम् ॥ १४ ॥

व्यासः—

सम्पूज्य गन्ध माल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।
धर्म कर्मणि माङ्गल्ये संग्रामेऽद्भुत दर्शने ॥ १५ ॥

---

* मुकुल—ईषत् विकसित् कलिकायाम् ।

यमः—

पुण्याह वाचनं सर्वं ब्राह्मणस्य विधीयते ।
तदेव च निरोङ्कारं कुर्यात् क्षत्रिय वैश्ययोः ॥ १६ ॥

स्मृतिसंग्रहे—

शुभे कर्मणि पुण्याह वाचने कलशद्वयम् ।
दक्षिणस्थः स्थिरश्चैव उत्तरस्थश्चरो भवेत् ॥ १७ ॥

अस्त्विति समये पात्रमध्ये जलमोचनं कार्यमित्युक्तं प्रयोग चूड़ामणौ प्रयोगरत्नेपि शान्तिरस्तु इत्यादि वाक्यानि पठन् प्रति वाक्यं पात्रे जलं पातयेत् ।

व्यास वचनात्—आचार्य्यादि ब्राह्मणानां अत्र सम्पूज्येति वरणा पूर्वक पूजनं कुर्यात् । तद्यथा ॐ अद्य अ० गोत्र अ० शर्म्माहं मम सकुटुम्बस्य क्षेमायुरारोग्य परम श्रीसुख प्राप्तये करिष्यमाण अमुक कर्म करणार्थं आचार्य्यादि ब्राह्मणानां वरणपूर्वक पूजनं करिष्ये । इति संकल्प्यतान् यथावकाशं सम्पूज्य प्रार्थयेत्—

अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।
देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥
जपयज्ञैस्तपो होमैर्दानैश्च विविधैः पुनः ।
देवानां पितृणां चैव तृप्त्यर्थं याजकाः कृताः ॥
अदुष्ट भाषण सन्तु मासन्तु परनिन्दकाः ।
ममापि नियमा एते भवन्तु भवतामपि ॥

ततो द्विजा यजमानहस्ते रक्षाबन्धनं तिलकं च कुर्यात् ।

अत्र पुण्याह वाचने तदुपयुक्त कलशादि लक्षणमपि लिख्यते—

हैमराजत ताम्रा वा मृण्मया लक्षणान्विताः ॥ तल्लक्षणम् ॥
पञ्चाशाङ्गुल वै पुल्य मुत्सेधः षोडशाङ्गुलः ।
द्वादशाङ्गुल मूलं स्यान्मुखमष्टाङ्गुलं भवेत् ॥
अश्वत्थोदुम्बरप्लक्ष चाम्रन्यग्रोधपल्लवाः ॥ इति ब्राह्मे ॥

न्यग्रोध पिप्पलप्लक्ष जम्बू चूत तरूद्भवाः ॥
पल्लवाः पञ्चविज्ञेयास्त्वक् चैतेषाम पीष्यते ॥
इति विष्णु धर्म्मोत्तरे ॥

कुष्टं मांसी हरिद्रे द्वे मुरा शैलेप चन्दनम् ।
वचा चम्पक मुस्तां च सर्वौषधि गणः स्मृतः ॥
इति भविष्ये ॥

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकं ॥
स्मृत्यन्तरे पञ्चरत्नानि ॥

वज्रमाणिक्य वैदूर्य पुष्प रागेन्द्र नीलकम् ।
अभावे सर्वरत्नानां हेमं सर्वत्र योजयेत् ॥ विष्णु धर्मोत्तरे ॥

गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णोति वै दधिः ॥
तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ।
स्मृतिदर्पणे पञ्चगव्यम् ॥

## अथ पुण्याह वाचनार्थं कलश स्थापनम् ।

भूमि स्पर्शनम् ॥ ॐ महीद्यौः पृथिवीचनऽइमंय्यज्ञम्मि मिक्षताम् ॥ पिष्पृतान्नोभरीमभिः ॥ यवस्थापनम् ॥ ॐ ओषधयः समवदन्त सोमेन सहराज्ञा ॥ यस्मै कृणोति ब्राह्मणस्त ठं० राजन् पारयामसि ॥ कलश स्थापनम् ॥ ॐ आजिघ्र कलशम्मह्यात्वाव्विशन्त्विन्दवः ॥ पुनरूर्ज्जा निवर्त्त स्वसानः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्मा व्विशताद्रयि ॥ जल पूरणम् ॥ ॐ वरुणस्योत्तम्भ नमसि व्वरुणस्य स्कम्भ सर्ज्जनीस्थो वरुणस्यऽऋत सदन्न्यसि वरुणस्यऽऋत सदन्मसि वरुणस्यऽऋत सदन मासीद ॥ कलश कंठे वस्त्र वेष्टनम् ॥ ॐ युवा सुवासाः परिवीत आगासउश्रेयान्भवति जायमानः ॥ तंधीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ मृत्तिका ॥ स्योना पृथिविनो भवान्नृक्षरा निवेशिनी ॥ यच्छानः शर्मस प्रथाः ॥ गन्धम् ॥ ॐ त्वाङ्गन्धर्वा अखन त्वामिन्द्रस्त्वां बृहस्पतिः ॥ त्वामोषधे सोमोराजा विद्वान् यक्ष्माद मुच्यत ॥ ओषधिः ॥ ॐ याऽ ओषधीः पूर्वाजाता देवेभ्य स्त्रियुगम्पुरा ॥ मनैनुवभ्रूणा मह ठं० शतन्धा

मानि सप्त च ।। दूर्वा ।। काण्डात् काण्डात् प्ररोहन्ति परुषः प रुषस्परि ।। एवानो दूर्वे प्रतनु सहस्रेण शतेन च ।। पूगीफलम् ।। ॐ या फलिनीर्य्या अफला अपुष्पायाश्च पुष्पिणीः ।। बृहस्पति प्रसूता स्तानो मुञ्चन्त्वठंन्हसः ।। पञ्चरत्नम् ।। ॐ परिवाजपतिः कविरग्निर्हव्यान्य क्रमीत ।। दधद्रत्नानि दाशुषे ।। हेमम् ।। ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।। सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेमः ।। पञ्चपल्लवाः ।। ॐ अश्वत्थेवो निषदनम्पर्णेवोव्वसतिष्कृता ।। गोभायऽ इत्किलासथ यत्सनवथ पूरुषम् ।। कुशा ।। ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रस्मिभिः ।। तस्यते पवित्रपते पवित्र पूतस्य यत्कामः पुने तच्छकेयम् ।। पूर्णपात्रम् ।। पूर्णा दर्वि परापत सुपूर्णा पुनरापत ।। वस्नेवव्विक्रीणा वहा इष मूर्य ठं० शतक्रतोः ।। नालिकेरम् ।। ॐ श्रीश्चते लक्ष्मीश्चपत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूप मश्विनौ व्यात्तम् ।। इष्णन्निषाणा मुम्मइषाणः सर्वलोकम्मइषाणः ।। ॐ मनो जूतिरिति प्रतिष्ठाप्य तत्वा यामीत्यावाह्य वरुणं सम्पूज्य प्रार्थयेत्।। सर्वे समुद्राः सरितस्तीर्थानि जलदानदाः ।। आयान्तु यजमानस्य दुरित क्षयकारकाः ।। १ । काशी कुशस्थली मायाऽवन्त्ययोध्या मथोःपुरी ।। शालग्रामं सगोकर्णं नर्मदा च सरस्वती ।। तीर्थान्येतानि कुंभेऽस्मिन् विशन्तु ब्रह्म शासनात् ।। अभिमंत्रणम् ।। कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।। मूलेतस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।। कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।। ऋग्वेदोथ यजुर्वेदो सामवेदोह्यथर्वणः ।। अङ्गैश्च सहिताः सर्वे कलशन्तु समाश्रिताः ।। प्रार्थना ।। देव दानव सम्वादे मथ्यमाने महोदधौ ।। उत्पन्नोसि यदा कुम्भ विधृतो विष्णुना स्वयम् ।। त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः ।। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्टताः ।। शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।। आदित्या वसवो रुद्रा विश्वेदेवाः सपैत्रिकाः ।। त्वयि तिष्टन्ति सर्वैपि यतः काम फलप्रदः ।। त्वत्प्रसादादिमं यज्ञं कर्त्तु-मीहेजलोद्भव ।। सान्निध्यं कुरुमे देव प्रसन्नो भव सर्वदा ।। नमो नमस्ते स्फटिक प्रभाय सुश्वेतहाराय सुमङ्गलाय ।। सुपाश हस्ताय ऊषासनाय

जलाधिनाथाय नमो नमस्ते ॥ पासपाणे नमस्तुभ्यं पद्मिनी जीवनायक ॥ पुण्याह वाचनं यावत्तावत्वं सन्निधौ भव ॥ अथ पुण्याह वाचनम् ॥

अवनिकृत जानु मण्डलः कमल मुकुल सदृशमञ्जलिं शिरस्याधाय कलशं त्रिः प्रणम्यानन्तरं दक्षिणेन पाणिना सुवर्णपूर्णं कलशं धारयित्वा शिखः प्रार्थयेत् ॥ दीर्घा नागा नद्यौ गिरय *स्त्रीणि विष्णु पदानि च तेनायुष्प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति भवन्तो ब्रुवन्तु ॥ द्विजाः ॥ पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ एवं सर्वत्र यजमान वचनोत्तरं द्विजाः प्रतिवचनं दद्युः ॥ ब्राह्मणानां हस्ते सुप्रोक्षित मस्तु ॥ जलं ॥ शिवा आपः सन्तु ॥ उत्तरम् ॥ सन्तु शिवा आपः ॥ पुष्पं ॥ सौमनस्य मस्तु ॥ उ० अस्तु सौमनस्यम् ॥ अक्षतं चारिष्टं चास्तु ॥ अस्त्वक्षत मरिष्टं च ॥ गन्धाः पान्तु ॥ सौमङ्गल्यं चास्तु ॥ अक्षताः पान्तु ॥ आयुष्य मस्तु ॥ पुष्पाणि पान्तु सौश्रियमस्तु ॥ ताम्बूलानि पान्तु ॥ ऐश्वर्यं मस्तु ॥ दक्षिणाः पान्तु ॥ आरोग्य मस्तु दीर्घमायुः शान्तिः पुष्टि स्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु ॥ कर्त्ता ॥ यं कृत्वा सर्ववेद यज्ञ क्रिया कर्मारम्भाः शुभा शोभनाः प्रवर्त्तन्ते तमहमोंकारमादिं कृत्वा ऋग्यजुः सामाथर्व्वाशीर्वचनं बहुऋषिमतं सम्विज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ॥ द्विजाः ॥ वाच्यताम् ॥ ऋक् ॥ ॐ द्रविणोदा द्रविण सस्तुरस्य द्रविणोदास नरस्य प्रियं सत् । द्रविणोदा वीरवती मिषन्नो द्रविणो दारासते दीर्घमायुः ॥ यजुः ॥ ॐ द्रविणोदाः पिपीषति जुहोतप्रचतिष्टतनेष्ट्राहतुभिरिष्यत ॥ ऋक् ॥ सवितापश्चात्तात् सविता पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात् सवितानः सुवतु सर्वतातिं सवितानो रासतां दीर्घमायुः ॥ यजुः ॥ सविता त्वासवाना ँ सुवतामग्नि गृहपतीना ँ सोमोवनस्पतीनाम् ॥ व्वृहस्पतिर्व्वाचऽइन्द्रोज्ज्यैष्ट्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्म्म पतीनाम् । ऋक् ॥ नवो नवो भवति जायमानो न्हांकेतु रुषसामेत्यग्रम् ॥ भागं

---

* ॐ त्रीणिपदा विचक्रमे व्विष्णु गोपाऽअदाभ्यः ॥ अतो धर्म्माणि धारयन् ॥

देवेभ्यो विदधात्यायत् प्रचन्द्रमा स्थिरते दीर्घमायुः ॥ यजुः ॥ नत द्रक्षा ᳪंसि न पिशाचा स्तरन्ति देवानामोजः प्रथमज ᳪं ह्येतत् ॥ योविभर्त्ति दाक्षायण ᳪं हिरण्य ᳪं सदेवेषु कृणु ते दीर्घमायुः ॥ समनुष्येषु कृणुते दीर्घमायुः ॥ ऋक् ॥ ॐ उच्चाते दिवि दक्षिणावन्तो अस्थुर्य्ये अश्वदास हते सूर्य्येण हिरण्यदा अमृतत्वं भजन्ते व्वासोदाः सोमप्रतिरन्त आयुः ॥ यजुः ॥ ॐ उच्चाते जात मन्धसो दिवि सद्भूम्याददे उग्र ठं० शर्म्म महि-श्रवः ॥ ततः कर्त्ता ॥ व्रत जप नियम तपः स्वाध्याय क्रतु दया दम दान विशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ॥ द्विजाः ॥ समाहित मनसस्मः ॥ कर्त्ता ॥ प्रसीदन्तु भवन्तः ॥ द्वि० ॥ प्रसन्नास्मः ॥ ततः शान्तिरस्तु इत्यादि पठन् पात्रे जलधारां दद्यात् ॥ शान्तिरस्तु ॥ पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । ऋद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्य मस्तु । शिवमस्तु । शिवं कर्म्मास्तु । कर्म्म समृद्धिरस्तु । धर्म्म समृद्धिरस्तु । वेद समृद्धिरस्तु । शास्त्र समृद्धिरस्तु । धन धान्य समृद्धिरस्तु । पुत्र पौत्र समृद्धिरस्तु । इष्ट सम्पदस्तु ॥ भूमौ ॥ अरिष्ट निरसनमस्तु यत्पापं रोगं अशुभ अकल्याणं तद्दूरे प्रतिहतमस्तु । पुनः पात्रे ॥ यच्छ्रेयस्त-त्तदस्तु । उत्तरे कर्म्मणि निर्विघ्न मस्तु । उत्तरोत्तर महरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । तिथि करण मुहूर्त्त नक्षत्र ग्रह लग्न सम्पदस्तु । तिथि करण मुहूर्त्त नक्षत्र ग्रह लग्नाधिदेवताः प्रीयन्ताम् । तिथि करणेश मुहूर्त्तेश नक्षत्रेश ग्रहेश लग्नेश दैवते प्रीयन्ताम् । दुर्गा पाञ्चाल्यौ प्रीयेताम् । अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् । इन्द्र पुरोगा मरुद्गणाः प्रीयन्ताम् । वसिष्ट पुरोगा ऋषिगणाः प्रीयन्ताम् ॥ माहेश्वरी पुरोगा उमा मातरः प्रीयन्ताम् । अरुन्धती पुरोगा एकपत्न्यः प्रीयन्ताम् । विष्णु पुरोगाः सर्वेदेवाः प्रीयन्ताम् । ब्रह्मपुरोगाः सर्वेवेदाः प्रीयन्ताम् । आदित्य पुरोगाः सर्वेग्रहाः प्रीयन्ताम् । ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । श्री सरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती पुष्टि-करी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवन्तौ विघ्न विनायकौ

प्रीयेताम् । सर्वा कुलदेवताः प्रीयन्ताम् । सर्वा ग्रामदेवताः प्रीयन्ताम् । सर्वा इष्टदेवताः प्रीयन्ताम् । भूमौ ॥ हताश्च ब्रह्मद्विषः । हताश्च परिपंथिनः । हताश्च विघ्नकर्त्तारः । हताश्च विघ्नकराः शत्रवः पराभवं यान्तु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यं त्वीतयः ॥ पुनः पात्रे ॥ शुभानि वर्द्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवः सन्तु । शिवा अग्नयः सन्तु । शिवा आहुतयः सन्तु । शिवा ओषधयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा अतिथयः सन्तु । अहोरात्रे शिवे स्याताम् ॥ ऋक् ॥ शन्नः कनि क्रदद्देवः पर्ज्जन्योऽभि वर्षत्वोषधयः प्रतिधीयन्ताम् ॥ शन्नोद्या वा पृथिवीशं प्रजाभ्यः शन्नो अस्तु द्विपदेशं चतुष्पदे ॥ यजुः ॥ निकामे निकामेनः पर्ज्जन्यो वर्षतु फलवन्त्योनऽओषधयः पच्यन्तां योगक्षेमोनः कल्पताम् ॥ शुक्राङ्गारकं बुध बृहस्पति शनैश्चर राहु केतु सोम सहिता आदित्य पुरोगाः सर्वेग्रहाः प्रीयन्ताम् । भगवान्नारायणः प्रीयताम् । भगवान् परज्जन्यः प्रीयताम् । भगवान् स्वामी महासेनः प्रीयताम् ॥ पुरोनु वाक्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः सूर्य्योदये यत्पुण्यं तदस्तु । एतत्कल्याण युक्तम्पुण्यं पुण्याहं वाचयिष्ये ॥ इति कर्त्ता ॥ वाच्यता मिति द्विजाः ॥ कर्त्ता ॥ ब्राह्मं पुण्यं महर्यश्चसृष्ट्युत्पादनकारकं ॥ वेदवृत्तोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ भो ब्राह्मणा मम सकुटुम्बस्य सपरिवारस्य गृहे अमुक कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ३ ॥ द्विजाः ॥ पुण्याहं ३ ॥ ऋक् ॥ उद्गातेव शकुने सामगायसि ब्रह्मपुत्र इव सवनेशु शंससि वृषेव वाजी शिशुमतीरपित्या सर्व्वतो नः शकुने भद्रमावद विश्वतो नः शकुने पुण्यमावद ॥ यजुः ॥ पुनन्तु मा देव जनाः पुनन्तु मनसाधियः पुनन्तु व्विश्वा भूतानि जातवेदः पुनीहिमाम् ॥ पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुराकृतम् । ऋषिभिः सिद्ध गन्धर्वैं स्तत्कल्याणं ब्रुवन्तु नः ॥ भो ब्राह्मणा मम० ३ ॥ द्विजाः कल्याणं ३ ॥ ऋक् ॥ अपाः सोममस्तमिन्द्र प्रजाहि कल्याणी जाया सुवर्णं गृहे ते पत्रारथस्य वृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ यजुः ॥ यथे मां वाचं कल्याणी मावदानि जनेभ्यः ब्रह्मराजन्याभ्या ँ शूद्राय चार्य्याय च स्वाय चारणाय च ॥ प्रियो देवानां दक्षिणायै दातुरिह

भूया समर्थं मे कामः समृद्धयता मुपमादो नमतु ॥ सागरस्यतु या ऋद्धिर्महालक्ष्म्यादिभिः कृता ॥ सम्पूर्णा सु प्रभा वाचतां तां ऋद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणा मम० ॥ ऋद्धयताम् ३ ॥ ऋक् ॥ ऋद्धयाम स्तोमं सतु याम वाजमानो मंत्रं सरथै होपयातम् ॥ यशो नः पक्वं मधु गोश्वं तराभूतांशो अश्विनोः कामः प्राहुः ॥ यजुः ॥ सत्रस्यऽऋद्धिरस्य गन्मज्ज्योतिरमृता अभूम दिवं पृथिव्व्या अद्ध्यारुहा माविदामहे वान्स्व-ज्ज्योतिः ॥ स्वस्तिस्तु या विनाशाख्या पुण्य कल्याण वृद्धिदा ॥ विनायक प्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ स्वस्ति ३ ॥ ऋक् ॥ स्वस्ति ऋद्धि प्रपथे श्रेष्टारेकण सत्यभिया वाममेति सानो अमा सो अरणे नियातु स्वावेशा भवतु देव गोपाः ॥ यजुः ॥ स्वस्तिनऽइन्द्रो व्वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु । मृकंऽसूनोरायुर्यत् ध्रु वलोमशयोस्तथा ॥ आयुषा तेन संयुक्त जीवे मशरदां शतम् ॥ द्विजाः ॥ शतं जीवन्तु भवन्तः ३ ॥ ऋक् ॥ शतं जीव शरदो वर्द्धमानः शतं हेमन्ताच्छतमु वसन्ताम् शतमिन्द्राग्निः सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुहुः ॥ यजुः ॥ शतमिन्नु शरदो अन्तिदेवा यत्रा नश्चक्राजर संतनूनाम् पुत्रासो यत्र पितरो भवन्ति मानो मद्धयारीरिषता युर्गन्तोः ॥ शिव गौरी विवाहेया या श्री रामे नृपात्मजे ॥ धनदस्य गृहे या श्री रस्माकं सास्तु सद्मनि ॥ द्विजाः ॥ अस्तु श्री ॥ ३ ॥ ऋक् ॥ श्रियेजातः श्रिय आनिरयाय श्रियं वयो जर तृभ्यो दधाति श्रियं वसाना अमृतत्वमायत् भवन्ति सत्या समिथामि तद्रौ ॥ यजुः ॥ मनसः काममा-कूतिं व्वाचः सत्यमशीय पशूना ँ रूप मन्नस्य रसोयशः श्री श्रयता-म्मयि ॥ प्रजापति र्लोकपालो धाता ब्रह्मा च देवराट् ॥ भगवाञ्छाश्वतो नित्यं सनो रक्षतु सर्वतः ॥ ऋक् ॥ प्रजापतेन त्वदेतान्निन्यो विश्वा जातानि परितावभूव यत्कामास्ते जुहुमस्तन्नो अस्तुवयं स्याम पतयोरयी-णाम् ॥ यजुः ॥ प्रजापतेन त्वदेतान्यन्यो विश्वा रूपाणि परितावभूव यत्कामास्ते जुहुम स्तन्नो अस्त्वय ममुष्य पिता सावस्य पिताव्वय ँ स्यामपतयो रयीणाम् ॥ आयुष्मते स्वस्ति ३ ॥ ऋक् ॥ स्वस्तये वायु मुप ब्रवामहै सोमं स्वस्ति भुवन स्पतिः बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय

आदित्यासो भवन्तुनः ॥ यजुः ॥ प्रति पन्थाम पद्महि स्वस्ति गामनेहसम् येन व्विश्वाः परिद्विषोव्वृणक्तिव्विन्दतेव्वसु ॥ ऋक् ॥ महोअग्नेः समिधानस्य शर्मण्य नागा मित्रे व्वरुणे स्वस्तये श्रेष्टे स्याम सवितुः सविमनि तद्देवाना महो आद्याव्वृणीमहे ॥ यजुः ॥ विश्वानि देव सवितर्दुरितानि परासुव यद्भद्रन्तन्न आसुव ॥ ततः पत्नीं वामभागे चोपवेश्याभिषेकं कुर्य्यात् ॥ आपो हिष्टेत्यादि मंत्रैः ॥ आशीर्वादम् ॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ ब्रह्मवाक्य सदा नित्यं निघ्नन्तु तव शात्रवान् ॥ अक्षतान् विप्र हस्तेषु नित्यं वन्दन्ति ये नराः ॥ चत्वारो वृद्धि मायान्ति आयुः कीर्त्तिर्यशोबलम् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते धान्यं धनं पशुं बहुपुत्रलाभं शत्सम्वत्सरं दीर्घमायुः ॥ कृतैतदस्मिन्पुण्याह वाचने न्युनातिरिक्तोयो विधिः सउपविष्ट ब्राह्मणानां वचनात् श्री महागणपति प्रसादात्सर्वं परिपूर्णोस्तु इति कर्त्ताञ्जलिमावध्य प्रार्थयेत् ॥ द्विजाः ॥ ॐ अस्तु परिपूर्णः ॥ शुभम् ॥

## पुण्याह वाचनानन्तरं ब्रह्मादि द्वादशग्रहान्संपूज्य मातृकापूजनं कार्य्यम् ॥

शातातपः—

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः ॥
एतान्सम्पूज्य यत्नेन पश्चात् गौर्यादि मातरः ।
गणेश लक्ष्मीसहिता पूज्या लाभोपचारकैः ॥
कुड्यलग्ना वसोर्धाराः पंचधारा घृतेन तु ।
कारयेत् सप्तधारा वा नाति नीचा न चोच्छ्रिताः ॥
श्रीर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती ।
माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृत मातरः ॥
आयुष्याणि च शान्त्यर्थं जपेत्तत्र समाहितः ।
आनोभद्रीया दीत्याशीः प्रधानानि सूक्तानि पठेत् ॥

तत्र क्रमः ॥ ॐ भूर्भुवः स्वगणपते इहागच्छ इहतिष्ट ॥ ॐ भूर्भुवः स्वः गौरि इहागच्छ इहतिष्ट एवं सर्वत्र ॥ पद्मे० । शचि० । मेधे० । सावित्रि० । विजये० । जये० । देवसेने० । स्वधे० । स्वाहे० । मातः० । लोकमातः० । हृष्टि० । पुष्टि० । तुष्टि० । आत्मकुलदेवते० । श्री० ॥ इत्यावाह्यस्थापनम् । ॐ यथा गणपति रसि । गौर्यसि । पद्मासि । ॐ इत्येवम् श्री पर्यन्ताः सम्पूज्य वसोः पवित्रेति घृतधारां दत्वा षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य वृद्धिश्राद्धं कुर्य्यात् ॥

## अथ वृद्धिश्राद्धम् ।

वृद्ध मनुः—

पृथग् दिनेष्व शक्तश्चे देकस्मिन् पूर्व वासरे ।
श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तांत्रिकम् ॥

शङ्ख लिखितौ—

अलाभे भिन्न कालानां नान्दीश्राद्धं त्रयं बुधैः ।
पूर्वेद्यु रेव कर्त्तव्यं पूर्वाह्णे मातृ पूजनम् ॥

कर्मारम्भदिनात् पूर्वदिने श्राद्धत्रयं कुर्यादित्यर्थः ॥

## अथ साङ्कल्पिकाभ्युदय श्राद्धम् ।

अथ कर्त्ता चोत्तराभिमुखोपविश्य । आचम्य प्राणानायम्य पुण्डरीकाक्ष स्मरणं कुर्य्यात् । अपवित्रेति श्राद्ध सम्भारानात्मानं च सिञ्चयित्वा कर्मपात्रं स्थाप्य पवित्रं धृत्वा जलेनापूर्य यव गन्ध पुष्पादि प्रक्षिप्य हस्तेनाच्छाद्य गायत्रीं त्रिर्जपेत् । ततो यव पुष्पैः श्राद्धभूम्यै नम रिति त्रिः सम्पूज्य प्रार्थयेत् ।

मेदिनी लोकमाता च क्षितिरुर्वी धरा मही ।
भूमिः शैलशिलाचत्वं स्थिरा तुभ्यं नमो नमः ॥
धरणी काश्यपी क्षौणी रसा विश्वम्भरा च भूः ।
जगत्प्रतिष्ठा वसुधा त्वं हि मातर्नमोस्तुते ॥

वैष्णवी भूत देवी च पृथिवी त्वं नमोस्तुते ।
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥

अत्र भूमि पूजनानन्तरम् यदि सपिण्ड श्राद्धं कुर्य्यात्तदा नीवीं वध्नीयात् सांकल्पिके न बध्नीयान्मोक्षावसरा भावात् ॥

अथ विश्वेदेवादि चतुर्गणानां द्विर्द्विरित्यष्टा वासनानि संस्थाप्य । ॐ भूर्भुवः स्वः सत्य वसु संज्ञका विश्वेदेवा नान्दीमुखा युग्मरूपा इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः । ॐ भूर्भुवः स्व अमुक गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्यो युग्मरूपा इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ ॐ भू० अ० गोत्राः पितृ पितामह प्रपितामहा युग्मरूपा नान्दीमुखा इ० । ॐ भू० अ० गोत्रा मातामह प्रमातामह वृद्धप्रमातामहाः सपत्नीका नान्दीमुखा युग्मरूपा इ० ॥ तत आसनम् । ॐ भू० सत्यवसु संज्ञका विश्वेदेवा नान्दीमुखा युग्मरूपा इद मासनं वो नमो नान्दीश्राद्धे क्षणं क्रियतां यथा प्राप्नुवन्तो भवंतस्तथा प्राप्नुवामः । ॐ भू० अ० गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्यो युग्मरूपा इ० । ॐ भू० अ० गोत्राः पितृ पितामह प्रपितामहा नान्दीमुखा युग्मरूपा इ० । ॐ भू० अ० गोत्रा मातामह प्रमातामह वृद्धप्रमातामहाः सपत्नीका नान्दीमुखा युग्मरूपा इ० ॥ आपः पान्तु गन्धाः पान्तु अक्षताः पान्तु पुष्पाणि पान्तु एवं सर्वान्सम्पूज्य । ॐ भू० सत्यवसु संज्ञका विश्वेदेवा नान्दीमुखा युग्मरूपा इदं वो गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥ एवं मातृभ्यः पितृभ्यो मातामहेभ्यश्च दत्त्वा क्षीर यव जलानि दद्यात् । ॐ भू० सत्यवसु संज्ञका विश्वेदेवा नान्दीमुखा युग्मरूपाः प्रीयन्ताम् । ॐ भू० मातृ पितामही प्रपितामह्यो नान्दीमुख्यो युग्मरूपाः प्रीयन्ताम् । ॐ भू० पितृ पितामह प्रपितामहा नान्दीमुखा युग्मरूपाः प्रीयन्ताम् । ॐ भू० मातामह प्रमातामह वृद्धप्रमातामहाः सपत्नीका नान्दीमुखा युग्मरूपाः प्रीयन्ताम् । तत आशिषं प्रार्थयेत् । गोत्रं नो वर्द्धतां दातारो नोभि वर्द्धन्तां वेदाः सन्तरिरेव च श्रद्धाचनोमाव्यगमत् बहु देयं चनोस्तु

अन्नं च नो बहु भवेत् अतिथींश्च लभेमहि या चितारश्चनः सन्तु माचया चिष्मकंचनएताः सत्याशिषः सन्तु। सन्तु सत्याशिष इति द्विजाः। ॐ भू० श्सत्यवसु संज्ञकानां विश्वेषां देवानां युग्मरूपाणां नान्दीमुखानां कृतैतदाभ्युदयिक श्राद्ध प्रतिष्ठार्थमिमां द्राक्षामलक यव मूल निष्क्रयी भूतां द्रव्य दक्षिणां दातु मह मुत्सृजे। ॐ भू० मातृ पितामही प्रपितामहीनां नान्दीमुखीनां कृतैतदाभ्युदयिक श्राद्ध प्रतिष्ठार्थ मिमांद्राक्षामलक यव मूल निष्क्रयी भूतां द्रव्य दक्षिणां दातु मह मुत्सृजे। ॐ भू० पितृ पितामह प्रपितामहानां नान्दीमुखानां कृतैतदाभ्युदय श्राद्ध प्रतिष्ठार्थमिमां द्राक्षामलक यव मूल निष्क्रयी भूतां द्रव्य दक्षिणां दातु मह मुत्सृजे। ॐ भू० मातामह प्रमातामह वृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां कृतैतदाभ्युदय श्राद्ध प्रतिष्ठार्थमिमां द्राक्षामलक यव मूल निष्क्रयी भूतां द्रव्य दक्षिणां दातु मह मुत्सृजे।

ॐ व्वाजे व्वाजे वत व्वाजिनो धतेषु व्विप्राऽअमृता ऋतज्ञा अस्य मध्वः पिवत मादयध्वं तृप्ताया त पथिभिर्देवयानैः ॥ ॐ नान्दीमुख्या मातरः पितामहा मातामहाः सपत्नीका नान्दीमुखाः प्रीयन्ताम्। इति मातृकादीन् विसर्ज्य नान्दीमुखा विश्वेदेवाः प्रीयन्तामिति विसर्जयेत्। ततः कर्त्ता द्विजान्प्रार्थयेत्। अस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्ट ब्राह्मणानां वचनात् परिपूर्णोस्तु। ओमस्तु परिपूर्णइति द्विजाः॥ रक्षादीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य विष्णुं स्मरेत॥ इति सांकल्पिकाभ्युदय श्राद्धम्॥

## अथ सपिण्ड नान्दीश्राद्ध प्रयोगः।

अथ कर्त्ता चोत्तराभिमुखोपविश्येत्यादितो भूमि पूजनान्त कर्म पूर्ववत् कृत्वा नीवीं वध्नीयात्। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायते शुचिः। अष्टौ पत्राणि संस्थाप्य तेषु मोटक रूपाण्यासनानि दद्यात्। ॐ भूर्भुवः स्वः सत्यवसु संज्ञकानां विश्वेषां देवानां युग्मरूपाणा मिदमासनं वो नमो मे वृद्धिः।

ॐ भू० अमुक गोत्राणां मातृ पितामही प्रपितामहीनां नान्दीमुखीनां युग्मरूपाणा मिदमासनं वो नमो मे वृद्धिः । ॐ भू० अ० गोत्राणां पितृ पितामह प्रपितामहानां नान्दीमुखानां युग्मरूपाणा मिदमासनं वो नमो मे वृद्धिः । ॐ भू० अ० गो० मातामह प्रमातामह वृद्ध प्रमातामहानां सपत्नीकानां युग्मरूपाणा मिदमासनं वो नमो मे वृद्धिः । एवं सर्वत्र मातामहानां सपत्नीकोच्चारणं कुर्यात् । ❀ यवोसि सोमदेवत्यो गोसवो देव निमितः । प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् लोकान् प्रीणाहिनः स्वाहेति तेषु यवान् विकरेत् । नान्दीमुखान् सत्यवसु संज्ञकान् विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा । ॐ विश्वेदेवा स आगत शृणुताम इमं हवं इदं वर्हिर्निषीदत । यवोसीति मोटकोपरि यवान् विकीर्य । ॐ विश्वेदेवा शृणु तेमं हवं मे ये अन्तरिक्षे ये उपद्य विष्टये अग्नि जिह्वा उतवा यजत्रा आसाद्यास्मिन् वर्हिषि मादयध्वम् । आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । येह्यत्र विहिताः श्राद्धे सावधाना भवन्तु ते । तत ॐ अमुकामुक गोत्रान् मातृ पितृ मातामहान् नान्दीमुखान् पितृनहमावाहयिष्ये इत्युक्त्वा । ॐ उशन्तस्त्वा निधी उशन्तः समिधी मही उशन्न शत आवह पितॄन् हविषे अत्तवे । अपहतेति मोटकोपरि यवान् विकीर्य पठेत् । आयन्तुनः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानै अस्मिन् यज्ञे स्वधया मदन्तोधि ब्रुवन्तु तेवं त्वस्मान् ।

ततोर्घकरणम् । चतुर्गणानां चत्वार्यर्घपात्राणि संस्थाप्य तेषु पवित्रेस्थो० इति पवित्रं धृत्वा शन्नोदेवीति जलं यवोसीति यवान् गन्धद्वारेति गन्धं पुष्पवतीति पुष्पं प्रक्षिप्य एकं पात्रं वामहस्ते कृत्वा पवित्रं भोजन पात्रे धृत्वा तदुपरि किंचिदुदकान्तरं दत्वा उत्तान हस्तेनाच्छाद्य पठेत् । ॐ या दिव्या आपः पयसा संवभूवुर्या आन्तरिक्षा उत पार्थिवीर्या हिरण्य वर्णा यज्ञिया स्तान आपः संस्योना सुहवा भवन्तु । दक्षिण करेऽर्घ्यपात्र मादाय । ओमद्याभ्युदय श्राद्ध सम्बन्धिनो विश्वेदेवा युग्मरूपा एषत्रो हस्तार्घो नमो मे वृद्धिः । इति मोटकोपरि किञ्चिज्जलं प्रक्षिप्य पुष्पाक्षतानि दत्वा पुनरर्घ्यपात्रे पवित्रादि कान्निधाय विश्वेभ्यो देवेभ्यः स्थान

---

❀ अत्राश्वलायन गृह्य परिशिष्टे ऊहितस्य मंत्रस्य प्रयोगो दर्शितः ।

मसीति देवासन पश्चात्भागे दक्षिणपार्श्वे उत्तानं निदध्यात् । एवं मात्रादि त्रिगणानां पूर्ववत्पृथक् पृथगर्घेकरणं कृत्वा पात्राण्युत्तानमेवधारयेत् । तद्दक्षिणा दान पर्य्यन्तन्नोद्धरेन्नचालयेन्नस्पृशेत् । संकल्पस्त्वेवम् । ॐ भू० मातृ पितामही प्रपितामह्यो नान्दीमुख्य युग्मरूपा एषवो हस्तार्घो नमो मे वृद्धिः । ॐ भू० पितृ पितामह प्रपितामहा नान्दीमुखा युग्मरूपा एषवो हस्तार्घो नमो मे वृद्धिः । ॐ भू० मातामह प्रमातामह वृद्धप्रमातामहा नान्दीमुखा युग्मरूपाः सपत्नीका एषवो हस्तार्घो नमो मे वृद्धिः । अथ गन्धादि दान मेवम् । अयं वो गन्धः । इदं वः पुष्पम् । अयं वो धूपः । अयं वो दीपः । अयं वो ताम्बूलः । इदं वो वस्त्रं । इदं वो यज्ञोपवीतं । इदं वो माल्यं । एवं वा पार्वण श्राद्धोक्त मंत्रैर्दत्वा संकल्पं कुर्यात् ॐ भू० सत्यवसु संज्ञका विश्वेदेवा युग्मरूपा अभ्युदय श्राद्धे एतानि गन्ध पुष्प धूप दीप ताम्बूल यज्ञोपवीत वासांसिवो नमो मे वृद्धिः एवं मातृ पितृ मातामहेभ्योपि गन्धादि दत्वा संकल्पं कुर्यात् । मातामहानां सर्वत्र सपत्नीकोच्चारणं कुर्यात् । संकलपस्तु गोत्र कर्मनाम भेदेन पूर्ववत् ॥ ततः सजल पात्रासनानां चतुर्गणानां पृथक् पृथक् मण्डलानि कृत्वा देवभोजनपात्रे यथा सम्भवमन्नं सव्यं जनं परिविष्य जलं घृतं च पात्रान्तरेदत्वान्नोपरि मधु दत्वा संकल्पं कुर्यात् । तत्र क्रमः । उत्तान पाणिभ्यां भोजनपात्रमालभ्य पठेत् । ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृतं जुहोमि स्वाहा । इदं विष्णुर्विचक्रमे त्रेधानिदधेपदं समूढमस्यपांसुरे कृष्ण हव्यमिदं रक्षमदीयमिति पठित्वा वामकरेण पात्रमालभमानः अन्नोपरि दक्षिणाङ्गुष्ठं भ्रामयन् पठेत् । इदमन्नं । इमाआपः । इदमाज्यं । इदंहर्विरिति पुनरन्ने यवोसीत्यत्र समीपे यवान् विकीर्य यव जलान्यादाय । ॐ भू० सत्यवसु संज्ञका विश्वेदेवा युग्मरूपा अभ्युदय श्राद्धे इदमन्नं परिवेष्यं परिवेष्यमाणं घृताद्युपष्करसहितं ब्राह्मण भोजन तृप्तिक्षमममृत रूपं वो नमो मे वृद्धिः । ततः प्रार्थयेत् । अन्नहीनं क्रियाहीनं संपद्धीनं द्विजोत्तमाः । श्राद्धं संपूर्णतां यातु प्रसादात् भवतां मम ॥ ततः पुटकजले व्यञ्जन क्षाररहित मधु घृतप्लुतान्नेनाहुतिद्वयं जुहुयात् । ओमग्नये कव्यवाहनाय स्वाहा । ॐ सोमाय

पितृमते स्वाहा ॥ ततोपसव्यं कृत्वा पातितवाम जानुर्दक्षिणामुखस्तिल जल घृत सहितान्नमादाय ओमिदमन्नमेतत् भूस्वामि पितृभ्योनम इति भूमौ दत्वा सव्यो भूत्वा प्राङ्वोदङ्मुखः सन् मात्रादि सर्व पात्रेष्वन्नं परिविष्य तदुपरि मधु दत्वा पात्रान्तरे जलं घृतं च दत्वा उत्तान हस्ताभ्यां भोजनपात्रमालभ्य पूर्ववत् पठेत् ॥ ॐ पृथिवी ते० इदं विष्णुर्वि० कृष्ण कव्यमिदं रक्षमदीयम् । इदमन्नं । इमाआपः । इदमाज्यम् । इदं हविरिति हस्त भ्रामणं कृत्वा अपहतेत्यन्न समीपेयवान् विकीर्य्य यव जलान्यादाय । ओमद्यामुक गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्य युग्मरूपा अभ्युदय श्राद्धे इदमन्नं परिवेष्यं परिवेष्यमाणं घृताद्युपष्कर सहितं ब्राह्मण भोजन तृप्तिक्षममृत रूपं वो नमो मे वृद्धिः ॥ अन्नहीन मिति प्रार्थयेत् ॥ एवं पित्रादिभ्यो मातामहेभ्योपि पूर्ववद्दत्वा देवताभ्य इति त्रिर्जपेत् ॥ ततोदर्भानादाय असंस्कृत प्रमीतानां त्यागिनां कुलभागिनां ॥ उच्छिष्ट भागधेयानां दर्भेषु विकरासनम् ॥ इति भूमौनिधाय समधु घृत व्यंजनान्नमादाय ॥ अग्नि दग्धाश्च ये जीवा येप्य दग्धाः कुलेमम । भूमौदत्तेन तृप्यन्तु तृप्तायान्तु परांगतिम् ॥ तदुपरि निदध्यात् ॥ ततस्तिस्रो वालुका वेदीः कृत्वा तदुपरि अपहतेति रेखांकृत्वा ये रूपाणीत्यङ्गारं भ्रामयित्वा दक्षिणतः क्षिपेत् ॥ दूर्वाआस्तीर्य देवताभ्य इति त्रिर्जप्त्वा पुटकेषु जल यव गन्ध पुष्पाणि प्रक्षिप्य दक्षिणकरे तमादाय ॥ ॐ अद्यामुक गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्य अभ्युदय श्राद्धे पिण्डस्थाने अत्रावने निक्ष्वंवो नमो मे बृद्धिः । एवमवशिष्ट वेद्योरुपर्यवनेजनं ददत् पुटके किंचिज्जलमव रोषयेत ततो यव दधि वदर घृत मिश्रितान् पक्कान्न पिण्डान् मधु घृताभिघारितान्निर्मायैकैकस्य द्वौद्वौ पिण्डौ दद्यात् एकनाम्नापरं तूष्णीम् ॥ यथा ॐ अद्यामुक गोत्रे मातर्नांदीमुखि अभ्युदय श्राद्धे एषते पिण्डो नमो मे वृद्धिः ॥ अस्योत्तरतो द्वितीयं तूष्णीन्निदध्यात् ॥ एवं शेषान् दद्यात् ॥

ततः कुशमूलेकरं प्रोद्याचम्य देवताभ्य० इति त्रिर्जपित्वा वामावर्त्तेनोदङ्मुखी भूय अत्र मातरो मादयध्वं यथा भाग मावृषायध्वमितिस्वा संनियम्य परावर्त्य अमीमदन्त मातरो यथा भाग मावृषायिषतेति

पिण्डेषु स्वास मुत्सृजेत् ॥ द्वितीय वेद्याम् अत्र पितरो मादयध्वं यथा भाग मावृषायध्वम् ॥ अमीमदन्त पितरो यथा भाग मावृषायिषत ॥ एवमपरमपि मातामह इत्यूहयन् स्वास मुत्सृज्य पूर्व दत्ता वनेजन पात्रमादाय ॥ ओमद्यामुक गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्य अभ्युदय श्राद्धे पिण्डोपरि प्रत्यवनेजनं वो नमो मे वृद्धिः ॥ ओमद्यामुक गोत्राः पितृ पितामह प्रपितामहा नान्दीमुखा अभ्युदय श्राद्धे पिण्डोपरि प्रत्यवनेजनं वो नमो मे वृद्धिः ॥ ओमद्यामुक गोत्रा मातामह प्रमातामह वृद्धप्रमातामहा नान्दीमुखाः सपत्नीका अभ्युदय श्राद्धे पिण्डोपरि प्रत्यवनेजनं वो नमो मे वृद्धिः ॥ नीवीं विस्रंस्य ॥ आचम्य देवताभ्यः पि० त्रिर्जपेत् ॥ वस्त्राण्यादाय ॥ ॐ नमो वो मातरो रसाय नमो वो मातरः शोषाय नमो वो मातरो जीवाय नमो वो मातरः स्वधायै नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो नमो वो गृहान्नं मातरो दत्त सतो वो मातरो देष्म इति नमस्कृत्वा एतद्वो मातरो वासो नमो मे वृद्धिः इति दद्यात् ॥ पितृ सूत्रदानेतु नमो वः पितरो रसाय० इति मंत्रोच्चारणीयः ॥ एवं मातामहेषु सूत्रं दद्यात् ॥ ततो यव जलान्यादाय ॥ ओमद्यामुक गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्य अभ्युदय श्राद्धे पिण्डोपरि एतद्वो वासो नमो मे वृद्धिः ॥ एवं पितॄणां मातामहानां संकल्पं कृत्वा सूत्र मुत्सृजेत् ॥ ततः प्रतिपिण्डं गन्ध पुष्प धूप दीप ताम्बूलाक्षतादिभिः सम्पूज्य ब्राह्मण भोजनार्थं पाचितान्नेभ्यः किंचित्किंचित् सव्यञ्जनान्नं पिण्डेषु निवेद्य दक्षिणां दद्यात् ॥ शिवा आपः सन्तु ॥ इति यवोदकम् ॥ सौमनस्यमस्तु–इति पुष्पम् ॥ अक्षतं चारिष्टं चास्तु । इति तंडुलान् भोजनपात्रेषु प्रक्षिप्य ॥ यव जलान्यादाय ॥ ओमद्य सत्यवसु संज्ञकानां विश्वेषां देवानामभ्युदय श्राद्धे दत्तै तदन्नपानादिकमक्षयमस्तु नमो मे वृद्धिः ॥ पुनर्यवजलान्यादायमातॄणां पितॄणां मातामहानामक्षयं दद्यात् ॥ तत ॐ अघोरा मातरः सन्तु ॥ अघोराः पितरः सन्तु ॥ अघोरा माता महादयः सन्तु ॥ इति मातृ पूर्वपिण्डेषु जलधारां दत्वाशिषं प्रार्थयेत् ॥ गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धन्तां वेदाः सन्तति रेवच श्रद्धाचनो माव्यगमत् वहुदेयं चनोस्तु अन्नं च नो वहुभवेत् । अतिथींश्चलभेमहि याचितारश्चनः

सन्तुमाचयाचिष्म कंचन ॥ एताः सत्याशिषः सन्तु सन्तु सत्याशिष इति द्विजाः ॥ ततः पिण्डोपरि सपवित्र कुशानाच्छाद्य ॐ ऊर्ज्जमिति पिण्डोपरि जलधारां दद्यात् ॥ ततः पिण्डानाघ्रायोत्थापयेत् ॥ पिण्डाधार कुशानुल्मुकांश्च वह्नौ क्षिपेत् ॥ ततोऽर्घपात्राणि संचाल्य द्राक्षामलकयव मूलानि गृहीत्वा ॐ भू० सत्यवसु संज्ञकानां विश्वेषां देवानां कृतैतदभ्युदय श्राद्ध प्रतिष्ठार्थमिमे फलमूले बनस्पति दैवते यथा नाम गोत्रेभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृजे ॥ एवं मात्रादि सर्व्वं गणेभ्योदत्वा ॥ ॐ वाजे वाजेवत वाजिनोधनेषु विप्रा अमृता ऋतज्ञा अस्यमध्वः पिवतमादयध्वं तृप्तायात पथिभिर्देवयानैः । नान्दीमुखाः पितरः प्रीयन्तामिति विसृज्य ॐ विश्वेदेवाः प्रीयन्तामिति देव विसर्जनं कृत्वा प्रार्थयेत्। माता पितामहीचैव तथैव प्रपितामही । एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥ ततो देवताभ्य इति जपित्वा वामेनपाणिना दीपं निर्वाप्य करौ पादौ प्रक्षाल्य कर्म सम्पूर्णार्थं हरिस्मरणं कुर्यात् ॥

॥ इति सपिण्डनान्दीश्राद्धम् ॥

श्राद्धात्सिद्धिमवाप्नुवन्तिमनुजा स्तस्माद्धि तत्सिद्धये ।
गुम्फ्यन्ते विधि बोधकानि वचनान्यस्मिन्नृषीणां क्रमात् ॥
चिन्तां श्राद्धविधौ बुधामपनयन्सन्मार्गमादर्शयन् ।
श्रीमद्गौडगजाननेनरचितोऽयं श्राद्धचिन्तामणिः ॥

श्रीपण्डितप्रवरेण गजाननगौडेनैकाकिनैव सिद्धि नवनिधिचन्द्र मिते वैक्रमीयेऽब्दे सम्पूर्णीकृतो मुद्रापितश्चतेन श्रुतिधरगणाः प्रीयन्ताम् ॥ 

॥ इतिसम्पूर्णोऽयं श्राद्धचिन्तामणिः ॥

